# भूमिका ।

यदुपज्ञं त्रयीतत्त्वबीजं येन प्रवर्द्धितम् ।
शठजिज्जह्नगणमुनी तावुभौ संश्रयेमहि ॥

इह खलु न परोक्षमिदं विवेचकानां यत् धर्मार्थकाममोक्षभेदेन चतुर्धा प्रविभक्तासु, पुरुषार्थपदवीषु मध्यमयोर्द्वयोः लोकशास्त्रोभयगम्यत्वम् इतरयोश्च शास्त्रैकसमधिगम्यत्वमिति, शास्त्रेषु च बहुधा विततेषु पुंस्पर्शक्लेशसम्भावनागन्धविधुरतया भ्रमप्रमादविप्रलिप्साकरणापाटवरूपैरप्रामाण्यसाधनीभूतैर्दोषैश्चतुर्भिरप्यपरामृष्टो ऐहिकामुष्मिकसकलपुरुषार्थतत्साधनावबोधितया मातापितृसहस्रेभ्योपि वत्सलतरः वेदाख्यो ग्रन्थराशिरेव प्रधानभूतं शास्त्रमित्यपि सुविदितमेव विचक्षणानाम्, यथाह कृष्णद्वैपायनः—

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदाच्छास्त्रं परं नास्ति न दैवं केशवात्परम् ॥ इति ।

सोयं ग्रन्थराशिः ऋगादिभेदेन चतुर्धा परिगण्यमानोपि ऋगादिभ्यस्त्रिभ्यो नातिरिच्यते, सन्ति हि मन्त्राणां त्रय एव प्रकाराः ऋचस्सामानि यजूंषीति, निगदानामपि यजुरन्तर्भावस्य भेदलक्षणप्रथमचरणे निरूपिततया न चतुर्थव्यपदेशभागि किञ्चिदुपलभ्यते, अथर्वणः पृथक्परिगणनं तु त्रेतासाध्येषु यज्ञकर्मस्वनुपयोगात् शान्तिकपौष्टिकादिनिरूपणपरतयाऽतिरहस्यत्वाच्च, न पुनर्वेदत्वव्याप्यऋक्त्वादित्रितयातिरिक्तावांतरजातिमत्वात् ।

कर्मब्रह्माख्यप्रतिपाद्यभेदवशात् काण्डद्वयात्मना प्रविभक्तस्य अलौकिकार्थप्रमितिभाव्यकभावनायां करणीभूतस्य तस्यैतस्य निगमराशेः स्वार्थगोचरप्रमित्युत्पत्तय इतिकर्तव्यतासापेक्षस्य सम्यङ्न्यायकलापरूपेतिकर्तव्यतोपस्थापनपरसूत्रसन्दर्भात्मकं मीमांसाशास्त्रं प्रणिनीषुः भगवदवतारविशेषभूतो बादरायणः स्वान्तेवासिजैमिनिमुखेन

पूर्वकाण्डप्रधानप्रतिपाद्यकर्मस्वरूप—तदाराध्यदेवतास्वरूपनिर्णयफलकं षोडशाध्यायीरूपं सूत्रजातं विरचय्य उत्तरकाण्डप्रधानप्रतिपाद्यब्रह्मस्वरूपरूपगुणविभवादिपरिज्ञानाय चतुरध्यायीं ब्रह्ममीमांसां स्वयमेव प्रणिनाय ।

तत्र प्रमाणभेदशेषत्वप्रयुक्तिक्रमाधिकारसामान्यविशेषातिदेशोहबाधतन्त्रप्रसङ्गाख्यपदार्थविशेषनिरूपणमुखेन सपरिकरप्रकृतिविकृत्यात्मककर्मस्वरूपम्—अग्नीन्द्रादिसकलदेवतान्तर्यामिणो ब्रह्मशब्दवाच्यस्य विष्णोरेव यथोक्तसकलकर्मसमाराध्यत्वम्— देवतास्वरूपभेदतदुपासनादिकं च कर्मकाण्डदेवताकाण्डयोः निरूप्य प्रकृतिपुरुषकालविशिष्टं ज्ञानशक्त्याद्यनन्तकल्याणगुणगणाकरं पुरुषोत्तमनारायणादिशब्दवाच्यं परं ब्रह्मैवोपादाननिमित्तसहकारिरूपत्रिविधकारणं भवतीति ब्रह्ममीमांसायाः प्रथमेनाध्यायेन प्रतिपाद्य तस्यैतस्य वेदरहस्यस्य दुर्दर्शनैरविचाराश्यत्वं दर्शयितुमुच्चावचानि बाह्यकुदृष्टिमतानि द्वितीयेन निरस्य यथोक्तलक्षणस्य ब्रह्मण एवोपायत्वमुपेयत्वञ्चोत्तरद्विकेन व्यवास्थापयत् ।

येतु— भट्टप्रभाकरप्रभृतिभिरर्वाचीनैर्व्याख्यातृभिः— कर्माङ्गितदेवतानां नास्ति चैतन्यं नापि विग्रहादिकं, कर्मशेषभूतजीवाख्यसंसार्यात्मनोऽन्यः परमात्मा नाम कश्चन नाभ्युपगमकोटिमासीदति, कर्मजन्यमपूर्वमेव फलसाधनम्, जगदिदं प्रवाहरूपेण नित्यं, न कदाचिदनीदृशं जगत् , सृष्टिप्रलयौ न स्तः, चतुर्थ्यन्तपदस्वरूपमेव देवता, न ततोतिरिक्तं देवतास्वरूपं तदुपासनादिकं वा, मोक्षफलकतया व्यपदिश्यमानो नास्ति तुर्याश्रमो नाम कश्चन—इत्यादयः केचन श्रुतिन्यायविरुद्धा अर्थाः स्वस्वकल्पनास्वमनीषोल्लिखिताः ते सर्वेपि स्वाचार्यस्य बादरायणस्यानभिमततया सस्याप्यनभिमता एवेति न जैमिनिसूत्रारूढाः इत्ययमर्थः सेश्वरमीमांसायां निपुणतरमुपपादि ।

तामिमां ब्रह्ममीमांसां बोधायनटङ्कद्रमिडगुहदेवभारुचि

प्रभृतिपूर्वाचार्यप्रवर्तितसंप्रदायां सदर्थामपि कदर्थयितुं विरूपाक्षः पुण्डरीकाक्षस्यासुरविमोहनार्थं प्रवृत्तस्यानुल्लङ्घनीयं नियोगमनुरुन्धानः शङ्कररूपेणावतीर्याऽद्वैतभाष्यग्रन्थं जग्रन्थ, अन्यांश्च बहून् पुरुषान् स्वशक्त्या मलिनमतीन्विधाय तन्मुखेनापि शास्त्राभासान्प्रावर्तयत् । यथोक्तमभियुक्तैः—

श्रीशाङ्गर्भृत्त्वा त्रिपुरविजयी मोहनार्थामनुज्ञां
विश्वं मिथ्या जगदिति जगौ शङ्करीभूय भूयः ॥ इति ।

तथा अन्यत्रापि—

क्व वेदान्ताः क्वामी निहितमतयः शङ्करमते
वदन्तः प्रामाण्यं भ्रमविलसितं वेदवचसाम् ॥
अहो यद्बद्बुद्धग्रथितफणितीनामथ च ते
कलिग्राहग्रस्तैरगणिषत वेदान्तिन इति ॥ इति ।

तथा च पाद्मोत्तरखण्डे उमामहेश्वरसंवादप्रकरणे एकादशी-माहात्म्यं विस्तरेण पार्वतीं प्रत्युपदिष्टवता रुद्रेण हरिदिने पाषण्डानां दर्शनस्पर्शनसंल्लापसहवासादयो न कार्या इति प्रसङ्गादुपदिष्टमर्थ-मुपश्रुत्य हन्त तर्हि भवतैव भस्मधारणादीनि पाषण्डचिन्हानि शास्त्र-निषिद्धानि कथं धार्यन्त इति पार्वत्या पुनः पृष्टः 'नमुच्याद्या महा-दैत्याः पुरा स्वायम्भुवेऽन्तरे' इत्युपक्रम्य महता प्रबन्धेनामुमर्थमुपदि-शति—नमुचिप्रमुखेषु दैत्येषु स्वयं विष्णुभक्तत्वमास्थाय विष्णुभ-क्त्यनेन्द्रादीन् बाधित्वा तदीयस्थानानि बलादाच्छिद्योपभुञ्जानेषु शरणमुपगतैर्देवैर्विनिवेदितदुःखैरापद्विनिवर्तनाय समभ्यर्थितो भगवा-न्नारायणः स्वभक्तानां नमुच्यादीनां स्वाज्ञोल्लङ्घनकारिणां भक्तिसम-काले निरसनमशक्यमधर्म्यं च मन्वानः प्रथमं तेषां स्वस्मिन्विप्रतिपत्तिं सञ्जनय्य ततस्तानानायासेन प्रतिक्षिपामीत्यभिसन्धाय देवो देवि मामे-वमाज्ञापयतिस्म—

इत्याकर्ण्य हरिर्वाक्यं देवानामभयार्थिनाम् ।

तांश्च वृद्धान्विदित्वाथ मामाह पुरुषोत्तमः ।

श्रीभगवानुवाच—

त्वं च रुद्र महाबाहो मोहनार्थं सुरद्विषाम् ।
पाषण्डाचरणं धर्मं कुरुष्व सुरसत्तम ॥
तामसानि पुराणानि रचयस्व च तान्प्रति ।
मोहनानि च शास्त्राणि त्वं कुरुष्व महामते ! ॥

इत्याद्यभिधाय पुनस्समादिष्टम्— वंशं तांश्च महामुनीन्

तव शक्त्या समाविश्य कुरुष्व जगतो हितम् ।
कथयिष्यन्ति ते विप्रास्तामसानि जगत्त्रये ॥
पुराणानि च शास्त्राणि त्वद्बलेनोपबृंहिताः ।
तथा पाशुपतं शास्त्रं त्वमेव कुरु सुव्रत ॥
कंकालं चैव पाषण्डमहाशैवादिभेदतः ।
अवलम्ब्य मतं सम्यग्वेदबाह्या द्विजाधमाः ॥
भस्मादिधारणात्सर्वे भवेयुस्ते न संशयः ।
त्वां परत्वेन शंसन्ति सर्वशास्त्रेषु तामसाः ॥
अहमप्यवतारेषु त्वां च रुद्र महाबल ।
तामसानां मोहनार्थं पूजयामि युगे युगे ॥
मतमेतदवष्टभ्य चरन्नेव न संशयः । इत्यादि,

नमुचिप्रमुखानां श्रद्धाजननाय पाषण्डचिन्हान्यवश्यं भवता धर्तव्यानीति भगवतोऽनुल्लङ्घनीयो नियोग एवात्र कारणमिति पार्वतीप्रश्नस्योत्तरमुक्त्वाऽनन्तरमेवमाह—

प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम् ॥
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥
अपार्थं श्रुतिवाक्यानां दर्शितं लोकगर्हितम् ।

कर्मस्वरूपं त्याज्यं यदत्रैव प्रतिपाद्यते ॥
सर्वकर्मपरिभ्रष्टं विकर्मस्थं तदुच्यते ।
परेशजीवयोरैक्यं मयात्र प्रतिपाद्यते ॥
ब्रह्मणोप्यपरं रूपं नैर्गुण्यं वक्ष्यते मया ।
सर्वस्य जगतोप्यत्र मोहनार्थं कलौ युगे ॥
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् ।
मयैव वक्ष्यते देवि ह्यसतां नाशकारणात् ॥ इत्यादि ।

तदेवं शाङ्करैरन्यैश्च कैश्चन भास्करयादवप्रभृतिभिः कदर्थितां तामिमां ब्रह्ममीमांसां पुनरुज्जीवयितुं बोधायनादिमहर्षिजनसंदर्शितं वैदिकतत्त्वघण्टापथं निष्कण्टकीकृत्य जगति प्रथयितुञ्च कृतसङ्कल्पो भगवान् स्वान्तरङ्गप्रधानपरिकरभूतं सर्वप्रकारकैङ्कर्यसाम्राज्यमूर्धाभिषिक्तं सहस्रफणामणिमण्डलमण्डितमादिशेषं तुण्डीरमण्डलमण्डनायमानायां श्रीमत्यां भूतपुर्यां श्रीभगवद्रामानुजरूपेण अवातारयत् ।

स्वावतारप्रयोजननिर्वहणसौकर्याय स्वस्य विंशतितमे वयसि तुर्याश्रममङ्गीकृत्य अत्यद्भुतातिमानुपचारित्रप्रसूतप्रतिक्षणसमुज्जृम्भमाणनवनवकीर्तिभरप्रसरविमलीकृतसमस्तदिगन्तराले हार्दतमोविनिर्भेदनपटीयस्तमान् समस्तसांसारिकसन्तापनिर्वापणपरमभेषजभूतान् निगमजलधिमध्यनिगूहितस्य तत्त्वस्य सर्वात्मना पुरतः समुपस्थापकान् श्रुतिसीमन्तिनीनां कुदृष्टिप्रणीतदुर्व्याख्यानसमुपजनितशोकाश्रुप्रमार्जनपूर्वकं मङ्गलसूत्रतां समुपगच्छतः वेदार्थसंग्रहादीन् नित्याराधनग्रन्थावसानान् [1]नव प्रबन्धान् नवरत्नानीव नवनिधीनिव च जगति समुद्भाव्य बाह्यकुदृष्टिध्वान्तमार्तण्डायमाने समस्त-

---

१ वेदार्थसङ्ग्रहः, वेदान्तसारः, वेदान्तदीपः, श्रीभाष्यम्, गीताभाष्यम्, शरणागतिगद्यम्, श्रीरंगगद्यम्, श्रीवैकुण्ठगद्यम्, नित्याराधनग्रन्थः इत्येते नवप्रबन्धाः श्रीभगवद्रामानुजसंप्रणीताः ।

सात्त्विकजनसमभिलषितसकलसन्तापोन्मूलनपूर्वकपरिपूर्णब्रह्मानन्दानुभवात्मकमोक्षसाम्राज्यविश्राणनदीक्षिते तस्मिन् यतिसार्वभौमे त्रिवेदीं भद्रवेदीं भजति श्रुतिवधूनां सर्वं दुःखमुन्मूलितम्, यथाहुरभियुक्ताः—

गाथा ताथागतानां गलति गमनिका कापिली कापि लीना
क्षीणा काणादवाणी द्रुहिणहरगिरः सौरभं नारभन्ते ।
क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद्दूरवान्तं
का शङ्का शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥ इति

तथा—

कपर्दिमतकर्दमं कपिलकल्पनावागुरां
दुरत्ययमतीत्य तद्द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः
करग्रहविचक्षणो जयति लक्ष्मणोयं मुनिः ॥ इति च ।

तदेवं साधुजनपरित्राणदुष्कृद्विनाशाभ्यां भगवतो नारायणस्यानुकुर्वाणेन श्रीमता लक्ष्मणमुनिना सकलजगदुज्जीवनाय समनुगृहीतेषु प्रबन्धेष्वन्यतममिदं प्रबन्धरत्नं यस्य वेदार्थसंग्रह इत्यन्वर्थं नामधेयं समुल्लसति जगतीतले। अस्य च प्रबन्धस्यावतरणे कारणमेवमैतिह्यरूपेण कथयन्ति लक्ष्मणमुनेर्जीवनचरित्रनिष्णाताः प्राचीनवृद्धाः—

[1]कदाचिद्यतिपतिः दिग्विजययात्राक्रमेण श्रीवेङ्कटाद्रिनिलयं रमासखमासेवितुमनाः श्रीशैलमधिरुह्य भगवन्तं श्रीनिवासमापादचूडमनुभूय तत्रैव निवसन्तं स्वयं तत्त्वनिर्णयकर्तेत्यात्मनि कृताभिमानं यज्ञमूर्तिं द्राविडनाम्ना प्रसिद्धं विद्वदग्रगण्यमवलोक्य तस्य भगवत्परिचरणयोग्यतां वैष्णवाग्र्यतां च आपादयितुं समुत्पन्नानुकम्पः श्रुतिनिगूढतत्त्वार्थोपन्यासवैखरीविशेषेण तं वशीकर्तुं भगवन्तं

[1] सेयं कथा दिव्यसूरिचरितादिप्राचीननिबन्धेषु द्रष्टव्या ।

श्रीनिवासमेव साक्षीकृत्य अनुपदमेव अमृतवर्षमिव वेदार्थसंग्रहवाग्मृतमेकोपन्यासमुखेन ववर्ष । उच्चावचानामपि शास्त्रवाक्यानामैककण्ठ्यं सामञ्जस्यं स्वारस्यविशेषञ्चावहन्तीनां अधरीकृतसुधामधुरिमधोरणीनां यतिपतिमुखविनिस्सृतानां वाणीनां श्रवणमुपलभ्य अनुभूय च ब्रह्मानन्दानुभवकल्पं स्वसंवेद्यमानन्दविशेषं तस्मिन्विपश्चिदपश्चिमे यन्निपतिमतखण्डनायाऽशक्नुवाने जोषंभावमुपगते अर्जुनव्याजात् भगवता गीताशास्त्रमिव तमेव व्याजीकृत्य जगदुपकृतये सोऽयं प्रबन्धो यतिपतिना समाविष्कृतो जगति पप्रथे,

तदेवं हार्दपरमपुरुषप्रेरणावशादनायासेन जगत्याविर्भूतं निखिलसाधुजनवृन्दानवरतपरिचिन्त्यमानं भाग्यवद्भिः पुरुषधौरेयैरत्यादरेण कण्ठे धार्यमाणं शब्दतोऽर्थतश्च प्रतिक्षणसमेधमानस्वसंवेद्यसुखविशेषमादधानं तमिमं प्रबन्धं सम्मुद्रणेन जगति प्राकट्यं नीत्वा समस्तास्तिकजनैरुपायनीकर्तुं कृतनिश्चयेन तत्रभवता श्रीवृन्दावननिवासिना धरणीधराचार्येण समारब्धमुद्रणस्यास्य ग्रन्थस्य संशोधने प्रेरिता वयं यथासमयमस्य संशोधनं निरवर्तयाम । यद्यपि काश्चन अशुद्धयोऽत्र अक्षराणां समुपलभ्येरन् तथापि विषयस्खालित्याभावात्तु उपलभ्यमाना यथोक्ता अशुद्धीर्विहाय गुणपक्षपातिनो विचक्षणाः गुणमात्रग्रहणेन सन्तुष्येयुरित्याशास्महे ।

तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥

२५–३–१९२९
दुर्मतिसंवत्सरस्य
फाल्गुनकृष्णद्वादश्यां स्थिरवासरे

इति विदुषामनुचरः
देवशिखामणिः रामानुजाचार्यः
यादवाद्रिनिवासरसिकः

सर्वदेशदिशाकालेष्वव्याहतपराक्रमा ।
रामानुजार्यदिव्याज्ञा वर्द्धतामभिवर्द्धताम् ॥





तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥

# अपरेयं भूमिका ।



तत्र तावत्साक्षाद्भगवत्प्रणीतपञ्चरात्रशास्त्रानेकसंहितासु शेषाव-तारत्वेन जोघुष्यमाणस्तत्रभवान् भगवान् रामानुजाचार्यः भगवद्या-मुनमुनिशिष्येभ्यः काञ्चीपूर्णादिभ्योऽधिगततत्त्वयाथात्म्यो भगवद्या-मुनमुनिपादाम्भोजप्रणिधानप्राप्तात्मसत्ताकः तत्प्रसादितमहापुरुषनिर्ण-यागमप्रामाण्यसिद्धित्रयगीतार्थसङ्ग्रहलक्ष्मीस्तोत्रचतुश्श्लोकीस्तोत्ररत्ना-ख्यान् प्रबन्धानवलोक्य द्रोणाचार्यैकलव्यवत् भगवद्यामुनाचार्य-पादादेव समधिगताखिलज्ञातव्यरहस्यः स्वावतारप्रयोजनं वेदमार्ग-प्रतिष्ठापनमवगच्छन् तादृशमार्गस्य बाह्यकुदृष्टिकण्टकाकीर्णत्वमव-धार्य तं निष्कण्टकं चिकीर्षुर्ब्रह्मवादे पराभूय तत्समयसमासादित-कुदृष्टिमतनिरासाय वेदार्थप्रमाजननाय च सर्वनिबन्धेभ्यः प्रथमं वेदा-र्थसंग्रहाख्यं प्रबन्धं व्यधत्त । तत्समयप्रसिद्धानि कुदृष्टिमतानि तावत् शाङ्करभास्करयादवप्रकाशमतानि त्रीण्येव, तत्र शाङ्करमते ब्रह्मव्यति-रिक्तस्य कृत्स्नस्य प्रपञ्चस्य मिथ्यात्वं ब्रह्मणश्च ज्ञातृज्ञेयभावशून्यत्वं निर्गुणत्वं चाङ्गीकृतमिति परिदृश्यमानमपि कृत्स्नं जगत्तन्मते वस्तुतो नास्त्येव, नापि परमार्थभूतोऽस्य जगतः कश्चिन्नियन्तेति, एवंब्रह्माति-रेकिकृत्स्नमिथ्यात्वे सत्यस्य ब्रह्मसिद्ध्यापादकस्य प्रमाणस्याप्यभावा-द्ब्रह्मसिद्धिरपि दुर्लभा । व्यावहारिकप्रमाणप्रमेयभावाङ्गीकारेऽपि किन्नाम व्यावहारिकत्वम् ? आपातप्रतीतौ सत्यामपि वस्तुतोऽतथात्वमिति चेत् किन्तेन प्रयोजनमिति तन्मते वेदार्थविचारोऽशक्यनिर्णयः । भास्करमते च सकलकल्याणगुणाकरमपि ब्रह्मोपाधिवशाद्बन्धमोक्ष-भाग्भवतीत्यङ्गीकृतम् । यादवप्रकाशीयेपि मते तादृशं ब्रह्म स्वभावत-श्चिदचिद्भ्यां भिन्नाभिन्नमिति चिदचिद्दोषभागपीत्यङ्गीकार्यम् इत्ये-तन्मतद्वयेपि वेदार्थविप्लवस्तदवस्थ इत्येतन्मतत्रयं पूर्वपक्षीकृत्य प्रत्या-

ख्यत् । अनन्तरं वेदान्तप्रधानपूर्वपक्षिजैमिनिमहर्षेः "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इत्येतत्सूत्रोक्तप्रकारेण क्रत्वर्थातिरेक्यौपनिषदसिद्धार्थप्रतिपादकवाक्यैर्ब्रह्मप्रतिपादनासम्भवमालोच्य सिद्धार्थेष्वपि शब्दव्युत्पत्तिं प्रदर्श्यार्थतो ब्रह्मविचारारम्भप्रवृत्तौ हेतुभूतायां कर्मणोऽल्पास्थिरफलत्वनिर्णयसहितानन्तास्थिरफलापातप्रतीतौ विशेष्यांशासिद्धिं परिहृत्य सिद्धार्थप्रतिपादकैर्वेदान्तवाक्यैरेव सिद्धार्थब्रह्मबोधनं सुशकमिति चिदचिच्छरीरकस्य परस्य ब्रह्मणः परमात्मनो नारायणस्य परतमत्वं तत्तद्देवतान्तर्यामित्वेन तत्तच्छब्दवाच्यत्वं च निरूप्य तस्य स्वरूपरूपगुणविभवादीन् देशविशेषविशिष्टस्य तस्य पत्नीपरिजनपरिच्छदादींश्च सोपबृंहणैर्वेदवाक्यैर्निरूप्योक्तस्यैव परब्रह्मणः परमप्राप्यत्वं तत्प्राप्तिसाधनञ्च परमा भक्तिरिति सर्वमपि प्रमेयं प्रमाणजातैर्निरूप्य सोपबृंहणस्य वेदस्यार्थोऽत्र संग्रहीतः । तस्मादेव ग्रन्थान्ते "सारासारविवेकज्ञा गरीयांसो विमत्सराः । प्रमाणतन्त्राः सन्ती"त्युक्तमिति. प्रमाणतन्त्राणां नास्मिन्नर्थे विप्रतिपत्तिः । इत्थमादौ भगवान् भाष्यकारो वेदार्थसंग्रहं विधाय तदन्वनतिविस्तरसङ्क्षेपं दीपाख्यानं बादरायणप्रणीतसूत्रव्याख्यानं कृत्वा तन्निगमनरूपं सूत्राणामतिसङ्क्षिप्तविवरणं साराभिधानं विरच्यानन्तरं वेदान्तसर्वस्वभूतं सर्वार्थोपबृंहितं श्रीभाष्यं निर्ममे । तदनु गीताभाष्यं गद्यत्रयं नित्याख्यं भगवत्समाराधनपरं ग्रन्थञ्चेति श्रीभगवद्यामुनाचार्यग्रन्थानुसारिणो नव ग्रन्थान्निर्माय वैदिकं मार्गं निष्कण्टकं चकार । तमिमं भगवद्रामानुजमुनिप्रथमकृतिभूतं वेदार्थसंग्रहं तात्पर्यदीपिकासमेतं वाराणसीवास्तव्या विद्वदग्रेसराः पण्डितस्वामिश्रीराममिश्रशास्त्रिणः काश्यां नागराक्षरैर्मुद्रापयामासुः । सम्प्रति कालविप्रकर्षात्संवृत्ते तादृशपुस्तकदौर्लभ्ये विदुषां तदावश्यकतामालोच्य । विशिष्टाद्वैतसिद्धान्तप्रचारणबद्धादराः परोपकारैकदीक्षाः पण्डितवर्याः श्रीधरणीधराचार्या एतन्मुद्रणकार्याय स्वान्तेवासिनं वेदान्ततीर्थोपाधिकं पण्डितश्रीधरा-

चार्यमाज्ञापितवन्तः । तेन च श्रीवृन्दावनधामनि स्वीयश्रीनिवास-नामनि मुद्रणालये तात्पर्यदीपिकायुतोऽयं वेदार्थसंग्रहोऽविप्रकृष्टमूल-टीकापाठयुतो मुद्रणद्वारा प्रकाशतां नीतः। अन्ये चास्मिन्मुद्रणालये भाषायां संस्कृते च रहस्यग्रन्था वेदान्तग्रन्थाश्च मुद्रिताः सन्ति । श्रीभाष्यमपि व्याख्याद्वयोपेतं मुद्रितप्रायमल्पैरेवैर्दिवसैः प्रकाश्येत । अत्र च स्वातन्त्र्येण मुद्रिता ग्रन्थाः श्रीधरणीधराचार्यस्वामिनामाज्ञया योग्याधिकारिभ्यो द्रव्यादानमनपेक्ष्यमुपायनीक्रियन्ते, परमस्मिन्समयेऽधिकारिणो विरलास्तस्मात्सर्वलोकशरण्यं भगवन्तं पुरुषोत्तमं योग्याधिकारिवृद्ध्यर्थं प्रार्थये येनैतेषां महाभागानां श्रमः सफलताभियादित्यावेदयन् विरमति—

भगवदीयो— भागवताचार्यः ।



# वेदार्थसङ्ग्रहस्य विषयसूची ।



# वेदार्थसङ्ग्रहस्य शुद्धाशुद्धपत्रम् ।



| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १० | २ | जीवात्मानः | जीवात्मनः |
| ,, | ६ | स्वरूप | स्वरूप |
| ११ | ६ | एकस्वरूपेति | एकस्वरूपेति— |
| १३ | १६ | यम | यमय |
| १८ | १६ | वायवा | वाक्या |
| ,, | १८ | करणयास्व | करणयस्वा |
| २० | १ | नन्द | आनन्द |
| २२ | १४ | नावद्यनिति | नावद्यन्निति |
| २३ | २१ | एतस्या वा | एतस्य वा |
| २४ | १० | ध्यत्हारेण | ध्याहारेण |
| २६ | १५ | यगत्कार | जगत्कार |
| २७ | २२ | नाना व्यव | नानात्वैव |
| ३१ | ८ | नन्तत्या | नन्तेत्या |
| ३२ | २० | तथासतीत्यादिग्रन्थश्चिन्त्यः, | |
| ३३ | २४ | स्थित्वं | स्थितत्वं |
| ३६ | २० | मेव | म् |
| ३७ | २२ | चिद्रूपणो | अचिद्रूपणो |
| ४२ | २५ | तत्तत्पर्यन्त | तत्पर्यन्त |
| ४६ | १२ | एतद्विपयस्य | एतद्विपयवाक्यस्य |
| ५० | १ | इतिच्छब्देन | इतितच्छब्देन |
| ५० | ८ | मूत | मूत |
| ५४ | ६ | गर्भित्वा | गर्भितत्वा |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ५५ | ३ | अनन्य | अन्य |
| ६६ | १ | कार्यं | त्कार्यं |
| ७३ | १६ | प्रकान्तम् | प्रक्रान्तम् |
| ७६ | १२ | जंजगत | जंगत |
| ७७ | १४ | धिष्ठातृ | धिष्ठातृत्व |
| ७८ | २१ | एवं | एवं— |
| ८२ | १२ | र्वर्ग्य | र्वर्म्य |
| ,, | २० | स्पट | स्फुटं |
| ८४ | ३ | वोक्तः | वोक्तम् |
| ,, | १२ | तद्म | तम्र |
| ,, | १३ | शम्र | याम्र |
| ,, | १४ | तद्म | तम्र |
| ८६ | १ | तस्याश्च । मिथ्या | तस्याश्च मिथ्या |
| ९७ | १४ | यावादीना | यावादिना |
| ,, | १८ | वाघात् | भावात् |
| ९८ | २१ | विरोध | विरोधा |
| १०० | २१ | द्रूपयेवो | द्रूपस्येवो |
| १०२ | १४ | आकशस्य | आकाशस्य |
| १०५ | ६ | चाभ्युपमात् | चाभ्युपगमात् |
| १०८ | १६ | यथेति | यथेत्ति |
| १०९ | १८ | भिन्नत्वं | भिन्नत्वं |
| ११४ | १२ | भेनेनै | भेदेनै |
| ११५ | ६ | एतत् | मेतत् |
| ११६ | ११ | कोप | क्रोध |
| ११७ | १६ | मुख्याभिधे | मुख्याभिधे |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११८ | १२ | तत्वाद् | तत्वाद् |
| ११९ | ७ | धारणत्वं | धारणम् |
| १२० | १७ | किमत्य | किमित्य |
| १२२ | २३ | तयति | तयेति |
| १३२ | १६ | वच्यत्वे | वाच्यत्वे |
| १३४ | १२ | शब्दोनौ | शब्दो नौ |
| १३५ | ७ | योऽपि अपिशब्दा | योऽपि शब्दा |
| ,, | २२ | ष्णुकर्मक | विष्णुकर्मक |
| १३७ | १८ | जीबात्मन | जीवात्मान |
| १३८ | २३ | रूपस्य | स्वरूपस्य |
| १३९ | २० | व्यख्येय | व्याख्येय |
| ,, | २४ | दृष्टि | दृष्ट |
| १४४ | १४ | पदं | पदे |
| १४५ | ८ | रूपा | रूपता |
| १५१ | १६ | ज्ञान | ज्ञाना |
| १५८ | ११ | नैर्घृण्य | नैर्घृण्यं |
| १५९ | २५ | संख्यंय | संख्येय |
| १६४ | १८ | स्युक्तेः | स्युक्ते |
| १६५ | ८ | तदन्तरं | तदनन्तरं |
| १६६ | २२ | दाप्त्याति | दाप्त्यदि |
| १६७ | १३ | उपासकेस्वरूपस्य | उपायस्वरूपस्य |
| ,, | १४ | परिपगृ | परिगृ |
| १६२ | १३ | प्रयोजांमा | प्रयोजना |
| १७६ | २४ | मज्ञ | भज्ञा |
| १८१ | १६ | दनुवाक्य | दनुवाकवाक्य |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १८३ | १५ | मुख्यमी | मुख्यमि |
| १८७ | ६ | मुच्यत | मच्युत |
| ,, | २० | कर्मासु | कर्मास्तु |
| १९२ | १३ | भक्त | भक्तः |
| ,, | १६ | एडान्तान्त | एडान्त |
| १९३ | ३ | तात्पपु | तात्पु |
| ,, | १५ | विद्याया | विद्यायाः |
| १९५ | ११ | स्यैव | स्यैवं |
| ,, | १८ | दहरं | दहं |
| १९७ | २१ | इति करणा | इतिकरणा |
| २०९ | १६ | सज्ञायत | स ज्ञायत |
| २११ | २० | वेभूतित्वम् | विभूतित्वम् |
| २१२ | १९ | सर्वेश्वर्रे | सर्वेश्वरे |
| २१५ | १३ | मरिय | मीरय |
| २१६ | ९ | सस | सस्य |
| ,, | २४ | पेत्तक | क्षेपक |
| २१९ | १९ | इत्याह | इत्यत्राह |
| २२२ | ४ | मर्थवगम्य | मर्थमवगम्य |
| २२८ | १२ | संस्पृष्ठ | संसृष्ठ |
| २३१ | ७ | अत | अतः |
| २३२ | ४ | र्थान्वयी | र्थान्वयि |
| २३३ | १८ | तावत् | तत् |
| २३४ | ५ | त्वान्नयोपि | त्वान्वयोपि |
| २३५ | २ | देवत्त | देवदत्त |
| ,, | १२ | परत्व | परत्वं |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २३८ | १३ | "पूर्वं ब्रह्मणः" इत्यादिग्रन्थः किञ्चेत्यादि-मूलग्रन्थस्यावतरणिकारूपत्वेन पृथक्पङ्क्तौ-निवेशनीयः । | |
| ,, | १३ | तावकत्व | स्तावकत्व |
| २३९ | २ | " संविभक्तया इत्यत्र न लोपश्चिन्त्यः । व्याचष्टे हि" इत्येतावान् ग्रन्थः अक्षरयोजक-प्रमादवशादिहापतितः । | |
| ,, | १३ | तद्धिश्चं | तद्विश्वं |
| ,, | १४ | पदं | पदं व्याचष्टे |
| ,, | १७ | सफलेति | सकलेति |
| २४३ | १९ | त्वात् | त्वाभिधानात् |
| २४४ | ७ | तस्मात् "त्रा | "तस्माद्वा |
| २४६ | १३ | विहिति | विहित |
| ,, | १५ | नादिविहितं | नादि विहितं |
| २४७ | १५ | प्येव | प्यैव |
| २४९ | १८ | स्रकचन्दना | स्रक्चन्दना |
| २५१ | ३ | पत्न्यो | पत्न्यौ |
| २५३, | ४ | प्रमीत | प्रगीत |
| ,, | १० | प्रकणे | प्रकरणे |
| ,, | १९ | वद्विधि | वत्—विधि |
| २५६ | ३ | प्रसृत्या | प्रवृत्या |
| ,, | ४ | समस्तं ह्यय | संमस्तह्येय |
| ,, | ५ | त्रायंयप्ये | त्रीग्रयप्ये |
| ,, | ११ | भिधाना | पिधाना |
| ,, | १५ | तथा | तदा |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५६ | १५ | सोप्यमुख्य इत्यादिपाठश्चिन्त्यः | |
| ,, | २२ | घावक | धायक |
| २६० | ९ | तसत्या | ते सत्याः |
| २६४ | २२ | मण्डलेपुरुषः | मण्डलेऽर्चिर्षि पुरुषः |
| २६५ | ५ | तदाप्यनौ | तदाप्यौ |
| ,, | २५ | धर्मेप्विति | धर्मेष्वति |
| २६८ | २२ | रवर्तिनो | वर्तिनो |
| २६९ | १९ | ऐन्द्रि | ऐन्द्र |
| २७१ | १९ | कत्वविशेषात् | कत्वाविशेषात् |
| २७४ | ८ | पवोध | पवोध |
| २७७ | १२ | ऋतु | ऋत |
| २८२ | ३ | शेपत्वात् | शेपत्वं |
| ,, | १६ | लब्धा | लब्ध्वा |



श्रियै नमः ।

श्रीमते रामानुजाय नमः ।

नमो वेदान्तविशदीकरणदीक्षाय परमगुरवे बोधायनमहर्षये ।

श्रीभगवद्रामानुजविरचितः

# वेदार्थसंग्रहः ।



अशेषचिदचिद्वस्तुशेषिणे शेषशायिने ।
निर्मलानन्तकल्याणनिधये विष्णवे नमः ॥१॥

---

श्रुतप्रकाशिकाचार्यविरचिता

## तात्पर्यदीपिकाख्या व्याख्या ।

वरदं द्विरदाद्रिशेखरं कमलाया दयितं दयानिधिम् ।
सकलार्थिजनार्थितप्रदं प्रणमामि प्रणतार्तिहारिणम् ॥ १ ॥
कृत्वाऽनवद्यं निगमान्तभाष्यं निराकृतं येन भयं श्रुतीनाम् ।
प्रतारितानामबहुश्रुतैस्तं रामानुजं योगिनमाश्रयामः ॥ २ ॥
श्रीभाष्यकृदुपन्यस्तो यः श्रीशैलपतेः पुरः ।
वेदार्थसङ्ग्रहस्यास्य कुर्मस्तात्पर्यदीपिकाम् ॥ ३ ॥

अशेषेत्यादिश्लोकद्वयेन प्रारिप्सितप्रकरणाविघ्नपरिसमाप्त्यर्थं श्रोतॄणां तत्प्रसिद्ध्यर्थं च स्मृत्याचारप्राप्तं श्रुत्या मङ्गलमाचरति, श्रोतृबुद्धिसमाधानार्थमादौ प्रतिपाद्यसङ्क्षेपश्च क्रियते । तत्रेष्टदेवतोपासनारूपमङ्गलाचारः स्वपक्षस्थापनरूपप्रतिपाद्यसङ्क्षेपश्च क्रियते श्रौत आर्थश्च प्रथमश्लोकेन, स्वपक्षे च प्रतिपाद्यमुपायोपेयात्मकम्, तत्र सिद्धवस्तुस्वरूपमुपेयं चतुर्थ्यन्तैः पदैस्सूच्यते, नमश्शब्देनोपायः सूच्यते, तत्रोपेयस्य ब्रह्मण उभयविभूतिविशिष्टत्वं

पूर्वार्द्धेनोच्यते, निर्मलेत्यादिपदेनोभयलिङ्गत्वमुच्यते, तत्र विप्रतिपत्तिविषयस्य 'तत्त्वमसि' इति वाक्यस्यार्थनिष्कर्षणमुखेन लीलाविभूतिविशिष्टत्वमुच्यते—अशेषचिदचिद्वस्तुशेषिणे—इति प्रथमपदेन। जगद्ब्रह्मणोः सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनम्, शरीरत्वं च चेतनं प्रत्यनन्यार्हशेषत्वम्, एवं सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वे सति हि भेदश्रुतिभिर्घटकश्रुतिभिश्चास्य वाक्यस्याविरोधः। अशेषपदं चेतनबहुत्वं दर्शयति, कतिपयचेतननियन्तृताव्यावृत्तिश्चानेन सिद्ध्यति, वस्तुशब्देन परमार्थत्वं विवक्षितम्, अशेषवस्तुशेषिण इत्येतावताऽलं किमर्थं चिदचिच्छब्दप्रयोग इति चेत्;उच्यते—यादवप्रकाशमते सर्वमपि चेतनमेव. तत्र घटादेश्चैतन्यानभिव्यक्तिमात्रमेवेति न चिदचिद्विभाग इति तद्व्यावृत्तिश्चिदचिच्छब्दाभ्याम्। किञ्च—शाङ्करमते जीवब्रह्मणोस्सामानाधिकरण्यं स्वरूपैक्यनिबन्धनम्, अचिद्ब्रह्मणोस्तु बाधार्थमिति सामानाधिकरण्यस्य नैकरूपोऽर्थ इति तद्व्यावृत्तिश्चाभिप्रेता। किञ्च—भास्करमते जीवब्रह्मणोर्भेदश्रुतय औपाधिकभेदविषयाः, अचिद्ब्रह्मणोर्भेदश्रुतयः स्वाभाविकभेदविषया इति भेदश्रुत्यर्थो नैकरूपोऽभ्युपगत इति तद्व्यावृत्तिश्चाभिप्रेता। निश्शेषेत्यपि वक्तव्येऽकारस्य मङ्गलार्थत्वादशेषेत्युक्तम्, एवं लीलाविभूतिविशिष्टत्वमुक्तं भवति, नित्यविभूतियोगमाह—शेषशायिन इति, शेषशब्दः पत्नीपरिजनादेः प्रदर्शनार्थः,ताच्छील्यार्थप्रत्ययान्तत्वात् भोगविभूतिसम्बन्धस्य स्वाभाविकतया नित्यत्वमभिप्रेतम्। एवमुभयविभूतिविशिष्टत्वमुक्तम्। अथोभयलिङ्गत्वमाह— निर्मलानन्तकल्याणनिधय इति, निर्मलश्चानन्तश्च कल्याणनिधिश्चेति निर्मलानन्तकल्याणनिधिः 'निर्गुणं, निरवद्यम्, निरञ्जनं, अपहतपाप्मा, समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्' इत्यादिषु ब्रह्मविशेषणत्वेन निर्दोषत्वादिवाचिपदानां प्रयोगात्। नैर्मल्यं हेयप्रत्यनीकत्वम्। निर्मलत्वमनुकूलत्वं च परिच्छिन्नेषु केषुचिल्लाकृतवस्तुष्वप्यस्तीति तद्व्यावृत्त्यर्थं सकलचेतनाचे-

परं ब्रह्मैवाज्ञं भ्रमपरिगतं संसरति तत्

तनपरित्यागपूर्वकं प्राप्यत्वादिसिद्ध्यर्थं च तदुपयोग्यानन्त्यमाह—अनन्तशब्देन, अनेन वाङ्मनसनिवृत्तिरूपार्थगुणनिषेधपरिहारश्चाभिप्रेतः ॥

कल्याणशब्दोऽनुकूलवाचित्वादत्रानन्दाभिधायी, न हि प्रतिकूलोपेक्ष्येषु कल्याणशब्दप्रयोगः । यद्वा अनुकूलवेदनीयत्वात्सर्वे गुणाः कल्याणशब्दवाच्याः, निर्मलकल्याणशब्दाभ्यां सामान्यविशेष—गोबलीवर्दनयावभिप्रेतौ, निधिशब्देन गुणगुणिभावो विवक्षितः, अनेन 'आनन्दो ब्रह्म' इत्यादिष्वानन्दशब्दस्यानन्दिवाचित्वं सिद्धमित्यभिप्रेतम्, 'आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशात्, एवं हेयप्रत्यनीकत्वकल्याणगुणाकरत्वरूपोभयलिङ्गत्वं ब्रह्मण उक्तम्, विष्णुशब्दो धर्मिनिर्देशकः, अनेन शेषित्वमन्तर्यामित्वपर्यन्तामिति स्फोरितम्, रूढ्या देवताविशेषनिर्णयश्च । एवं चतुर्थ्यन्तैः पदैरुपेयवस्तु निरूपितम्, अथोपायं सूचयति—( नम इति ) 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' इत्रत्य मद्भक्तशब्दस्य प्रतिपदमन्वयेन नमस्याया भक्त्यन्तर्भावात्, ध्यानार्चनप्रणामादिरिति हि वक्ष्यते । एवं देवतोपासनरूपमङ्गलाचारश्श्रौतः कृतः, प्रतिपाद्ये स्वपक्षस्थापनसङ्क्षेपश्चार्थतः कृतः ॥ १ ॥

अथ द्वितीयेन गुरूपासनरूपमङ्गलाचारः श्रौतः क्रियते, आर्थः प्रतिपाद्ये परपक्षनिराससंक्षेपश्च क्रियते, तत्र पूर्वार्द्धेन परपक्षोपन्यससङ्क्षेपः, उत्तरार्द्धेन तन्निराससङ्क्षेपः, (परं ब्रह्मैवेत्यादि) परं—हेयप्रत्यनीकत्वकल्याणगुणाकरत्वाभ्यां सर्वविलक्षणम्, एवकारो विरोधं स्फोरयति, संश्रितदुरिततापहरत्वेन तदिष्टफलप्रदत्वेन च यदाश्रयणीयं तदेवाज्ञानपरवशं चेत्कोऽन्यो रक्षक इति भावः । अज्ञम्—अविद्यातिरोहितस्वरूपम्, अत एव भ्रमपरिगतं—विविधभेददर्शनशालि, संसरति— भेददर्शनकृतजन्मजरामरणादिसांसारिकदुःखभागीत्यर्थः, एवं शाङ्करमतमुपन्यस्तम् । अथ भास्करमतमुपन्यसते ( तत् ब्रो-

परोपाध्यालीढं विवशमशुभस्यास्पदमिति ।
श्रुतिन्यायापेतं जगति विततं मोहनमिदं

---

पाध्यालीढम् ) परशब्देनोपाध्यन्तरनिरपेक्षं स्वत एव प्रस्तुतब्रह्मव्यतिरिक्तत्वमुच्यते, पराभ्युपगतमिथ्याभूताविद्यान्यत्वं च विवक्षितम्, आलीढं—संबद्धं, विवशं—कर्मपरवशम् । अथ यादवप्रकाशमतम् (अशुभस्यास्पदमिति) अचिद्गतपरिणामार्हतारूपाशुभस्य चिद्गतापुरुषार्थान्वयरूपाशुभस्य चास्पदमित्यर्थः । जीवब्रह्मणोर्भेदस्य स्वाभाविकत्वाभ्युपगमान्न ब्रह्मण्यपुरुषार्थान्वय इति वैषम्यं दुर्वचम्, अभेदस्यापि स्वाभाविकत्वाभ्युपगमेनापुरुषार्थान्वयादिति भावः । अचिद्ब्रह्मणोर्भेदाभेदौ स्वाभाविकौ, चिद्ब्रह्मणोस्त्वभेद एव स्वाभाविकः, भेदस्त्वौपाधिकः; मुक्तावभेदवचनादिति भास्करमतम् । चिद्ब्रह्मणोरपि भेदाभेदौ स्वाभाविकौ; मुक्तौ भेदस्यापि निर्देशादिति यादवप्रकाशमतम्, तस्मादुक्त एवार्थः । तत्राशुभस्यास्पदमिति न यादवप्रकाशमतोपन्यासः । परं ब्रह्मेत्यादिपदेन शङ्करमतोपन्यासः, तत्परोपाध्यालीढमित्यादिपदेन भास्करमतोपन्यासः, इतरत्त्वर्थसिद्धमिति केचित् । तदानीमशुभस्यास्पदमित्यचिद्गताशुभास्पदत्वमुच्यते । ततोऽपि पक्षत्रयोपन्यास इति निर्वाहो वरम्, कस्यचिन्मतस्यार्थसिद्धत्वादवान्तरविभागस्य कल्प्यत्वोपपत्तेः, इतिशब्दः पक्षत्रयस्वरूपपरः ॥

अथ तन्निराससङ्क्षेपः—

(श्रुतिन्यायापेतमिति) श्रुतिः—प्रमाणं, तदनुग्राहकस्तर्को न्यायः, तन्मतसाधकं तर्कानुगृहीतं प्रमाणं नास्तीत्यर्थः । यद्वा श्रुतिन्यायापेतं तन्मतं प्रमाणतर्कविरुद्धं, बाधकं तर्कानुगृहीतं प्रमाणमस्तीति भावः । तन्निरासे किं कारणमित्यत्राह (जगति विततमिति) श्रुतिन्यायापेतमिति प्रसिद्धत्वान्न तन्निरासे यत्नःकार्य इति चेत् तत्राह (मोहनमिदं तम इति) तमो यथार्थज्ञानावरणं, मोहनम्-अपरमार्थे, सम्यगर्थधीहेतुः, अपास्तं दूरत

तमो येनापास्तं स हि विजयते यामुनमुनिः ॥२॥

—:( स्वपक्षसंक्षेपः ):—

अशेषजगद्धितानुशासनश्रुतिनिकरशिरसि सम-

उत्सारितम्, इत्यार्थः परगतनिरासः। 'स ही'त्यादिना गुरूपासनमुक्तं 'जयत्यतिबलो रामः' इतिवत् स हि विजयत इत्युक्तम्। अनेन प्राकरणिकार्थस्य साम्प्रदायिकत्वमुक्तं भवति। एवमार्थं स्वपक्षस्थापनपरपक्षप्रतिक्षेपसङ्क्षेपं कुर्वता देवतागुरूपासनरूपोभयविधं मङ्गलं श्रौतमाचरितं भवति, तथा पूर्वैरनुष्ठितम्, 'नमस्कृत्य हृषीकेशम्' 'नमो भगवते तस्मै व्यासाये'त्यादिषु, तथा च श्रुतिः "यस्य देवे' इत्यादि ॥ २ ॥

अथ प्रथमश्लोकार्थमीषद्विस्तरेण वदन् प्राकरणिकमर्थं सप्रमाणकं प्रतिजानीते—अशेषजगदित्यादिना।

श्रूयते नित्यमिति व्युत्पत्तिसिद्धेन श्रुतिशब्देन वेदस्यापौरुषेयत्वान्निर्दोषत्वमभिप्रेतम्, निकरशब्देनाऽधीयमानकृत्स्नशाखार्थपर्यालोचनं विवक्षितम्, तत्राप्यनन्यपरपरभागसिद्ध इति दर्शयितुं शिरश्शब्दः, वक्ष्यमाणाभिप्रायेणायमर्थ इत्युक्तं, समधिगतः—सम्यगधिगतः अनधीतशाखान्तरार्थप्रतिपादकेतिहासपुराणादिभिस्सहाधिगत इत्यर्थः। जगतो मिथ्यात्वान्न भवदभिमतोपायोपेयपराः श्रुतयः, अपि तु निर्विशेषवस्तुज्ञानस्यैव मोक्षोपायत्वप्रतिपादनपरा इति शङ्का व्युदस्यति—( अशेषजगद्धितानुशासनेति ) जगद्धितज्ञापनप्रवृत्तस्य वेदस्य पूर्वमेव भ्रांते जगति प्रत्यक्षाद्यनवगतप्रमान्तरोत्पादकत्वमनुपपन्नमित्यभिप्रायः। हितम् उपायोपेयात्मकम् अनुशासनं—विविच्य ज्ञापनम्, अनुपूर्वः शासिर्विविच्य ज्ञापनार्थो दृष्ट इति हि शब्दाः, अशेषजगच्छब्देन सर्वाधिकारिण उच्यन्ते, हितानुशासनपरो वेदः कथं त्रिवर्गाद्यपुरुषार्थं पुरुषार्थं बोधयतीति चेत्-तत्तदधिकारिविशेषापेक्षया पुरुषार्थत्वमस्तीति तद्बोधनम्। तर्हि 'श्येनेनाभिचरन् यजेते'ति कथं पापतमजत्य-

धिगतोऽयमर्थः । जीवपरमात्मयाथात्म्यज्ञानपूर्वक-वर्णाश्रमधर्मेतिकर्तव्यताकपरमपुरुषचरणयुगल-

न्ताहितं कर्म विदधातीति चेत्— उच्यते, तच्च गद्यविशेषैर्बालानिव शठान् वशीकर्त्तुम् । यद्वा देवब्राह्मणहिंसकादिदुष्टनिग्रहार्थत्वेन तस्य हितत्वमिति । यद्वा अभिचारादिकर्म्माराध्यत्वतत्तत्फलप्रदत्वरूप-भगवदैश्वर्यविशेषज्ञापनेन तदभिधायिशास्त्रस्य हितपरत्वमिति । प्रथम-श्लोके उपायस्यातिसङ्क्षेपेण सूचितत्वात्तं विस्तरेण वदन् प्रतिज्ञातस्यार्थस्य शरीरमाह—(जीवेत्यादिना) [1]यद्वा याथात्म्यशब्देन 'तत्त्वमसी'तिवाक्ये त्वंपदस्य चेतनद्वयगर्भत्वं सूचितम् । 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इति परमात्मात्मकत्वं हि सत्यमुक्तं, तस्माद्याथात्म्यशब्दस्यायमेवाभिप्रायः । ज्ञानपूर्वकशब्देन वाक्यार्थज्ञानमात्रस्यानुप्रायत्वं सूचितं, वर्णाश्रमधर्मेति-कर्त्तव्यताकशब्देन कर्म्मणो विविदिषासाधनत्वं समुच्चयवादश्च व्यावर्तितौ । परमपुरुषपदेन ध्येयस्य हेयप्रत्यनीकत्वकल्याणगुणाकर-त्वाभ्यां सर्वविलक्षणत्वं देवताविशेषत्वं चोक्तम्, 'तमेवं विद्वान् नान्यः पन्था' इति श्रीपुरुषसूक्तानुरोधात्, चरणयुगलशब्देन स्वामिनि दासा-नुगुणा स्थितिर्दर्शिता, 'सर्वदा चरणद्वन्द्वं व्रजामी'त्यादिवचनानुगु-ण्यात्; ध्यानार्चनप्रणामादिरित्यत्रादिशब्देन 'सततं कीर्तयन्तो मा'-मित्यादिकीर्तनस्मरणादयो विवक्षिताः, ध्यानार्चनप्रणामादयः सर्वे उपासनशरीरान्तर्गताः, वर्णाश्रमधर्माः प्रयाजादिस्थानीयाः आग्नेया-दिषट्कस्थाने ध्यानार्चनप्रणामादिः । ध्यानं— मानसं, नामसङ्कीर्त्तनं वाचिकम्, अर्चनादि— कायिकं च कर्म, यद्यपि तत्र ध्यानस्य प्राधान्यमितरापेक्षया, तथाऽपि तद्विपाकरूपपरभक्त्यपेक्षयार्चनादि-तुल्यत्वव्यवहारः । एवं त्रिविधमुपासनम्, यथा 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' 'सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः' 'श्रवणं

[1] अत्र ग्रन्थो गलित इति भाति ।

ध्यानार्चनप्रणामादिरत्यर्थप्रियस्तत्प्राप्तिफलः।
अस्य जीवात्मनोऽनाद्यविद्यासंचितपुण्य-

कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्म-निवेदनम्। इति पुंसार्पिता विष्णौ भक्तिश्च नवलक्षणा।' इत्यादि, मद्याजी मदर्चनपरः· वेदनध्यानादिशब्दैरन्यतमोक्तावप्यर्चनप्रणामादिसहितध्यानस्योपायत्वं न्यायस्मृत्यनुगृहीतश्रुतिसिद्धं, तत्र सामान्यविशेषन्यायाद्वेदनादिशब्दानां ध्यानादिपरत्वसिद्धिवत् स्मृत्यनुगृहीतत्वात् अर्चनप्रणामादिसहितध्यानपरत्वसिद्धिरित्यर्थः। तस्माद् ध्यानार्चनप्रणामादिः सर्वोऽप्युपेयविरोधिनिरासकः। (अत्यर्थप्रिय इति) ध्यानार्चनंप्रणामादिः सर्वोऽपि अत्यर्थप्रीतिपूर्वकः कार्यः, 'मन्मना भवे'त्यादिवचने मद्भक्तो मन्मना भव मद्भक्तो मद्याजी भवेति प्रतिपदं मद्भक्तपदान्वयादिति भावः। एवं प्रथमश्लोकसङ्क्षिप्तमुपायस्वरूपं विस्तृतम्। उपेयमाह (तत्प्राप्तिफल इति) अयमर्थ इति अर्थशब्दस्य विशेषणत्वात्पुल्लिङ्गता, पूर्वमुपायस्यातिसङ्क्षिप्तत्वेन तद्विवरणपरत्वादस्मिन् ग्रन्थे उपायप्रधाननिर्देशः।

उपेयं निर्विशेषज्ञप्तिमात्रं, निवर्त्यं मिथ्यारूपमविद्यादिकम्। उपायो वाक्यार्थज्ञानमात्रं, न हि मिथ्यासर्पो गरुडध्याननिवर्त्यः, अपि तु नायं सर्प इति ज्ञानमात्रनिवर्त्यः तस्मान्न भवदुक्तस्योपायतेत्यत्राह (अस्येति) परमात्मैक्यानुपपत्तये तद्विरुद्धस्वभावतया प्रत्यक्षसिद्धत्वमुच्यते—अस्येति पदेन, अनादिशब्देनान्योन्याश्रयः परिहृतः, अविद्या 'श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन। अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मति'रित्युक्तप्रकाराविद्याऽत्राभिप्रेता, तया सञ्चितम् अविद्यासंचितं 'अविद्यासञ्चितं कर्म्मे'ति हि स्मृतिः। उपलक्षणादिव्यावृत्त्यर्थं पुण्यपापशब्दः, कथं पुण्यस्याऽविद्यासञ्चितत्वम्? तद्धि देहाद्यतिरिक्तात्मज्ञानवताऽनुष्ठीयते, उच्यते—यथाऽऽत्मनो देहादिविल-

पापरूपकर्म्मप्रवाहहेतुकब्रह्मादिसुरनरतिर्यक्स्था-वरात्मकचतुर्विधदेहप्रवेशकृततत्तदात्माभिमानज-नितावर्जनीयभवभयविध्वंसनाय देहातिरिक्ता-त्मस्वरूप–तत्स्वभाव–तदन्तर्यामिपरमात्मस्वरूप-तत्स्वभाव–तदुपासन–तत्फलभूतात्मस्वरूपावि-र्भावपूर्वकानवधिकातिशयानन्दब्रह्मानुभवज्ञापने

---

देहात्माहंदेहात्मज्ञानमविद्या तद्धता च पापं क्रियते, एवमात्मनो भग-वच्छेषत्वात्स्वतन्त्रात्मज्ञानमप्यविद्या, तन्मूलं स्वर्गादिफलदकर्मानुष्ठा-नमिति पुण्यस्याविद्यासञ्चितत्वोपपत्तिरिति, देहात्माभिमानिभिरज-डत्वादिधर्म्मके आत्मनि जडत्वाद्यारोपवद् भगवदात्मक आत्मनि स्वनिष्ठत्वारोपणं भ्रान्तिरेवेति अविद्यैव हि सा, एवंविधकर्मप्रवाहहे-तुकश्चतुर्विधदेहप्रवेशः, तत्कृतः–तत्तद्देहेष्वात्माभिमानः, अनात्मन्यस्वे-चात्मात्मीयधिया कर्म्म, कर्म्मणा शरीरप्रवेशः, तच्छरीरसम्बन्धेनावि-द्येति प्रवाहानादिता, तेनावर्जनीयं भवभयं जन्मजरामरणादिभयं मिथ्येति सहस्रकृत्व उद्घोषणेऽपि निवर्तयितुमशक्यमित्यभिप्रायेणा-वर्जनीयमित्युक्तम्, (तद्विध्वंसनायेति) एवं निवर्त्यमुक्तम्, अत्र जन्य-जनकभावोपपादनेन प्रतीतिमात्रसिद्धत्वाभावाददृष्टद्वारा निवर्त्त्यमिति सिद्धम्। (देहातिरिक्तात्मस्वरूपतत्स्वभावेति) स्वरूपं-ज्ञानानन्दैकस्वरूपं स्वभावो भगवच्छेषत्वम्, उपासकत्वानुगुणौ स्वरूपस्वभावौ जीवस्योक्तौ (तदन्तर्यामिपरमात्मस्वरूपतत्स्वभावेति) तदन्तर्यामिशब्देन जीवस्य परमात्मपर्यन्तत्वेन तद्वाचिशब्दस्य परमात्मपर्यन्तत्वं सिद्धम्, पर-मात्मस्वरूपम्–ईशितृत्वम्, स्वभावः–प्रणतसौलभ्यम्, उपास्यत्वानुगुणौ स्वरूपस्वभावावीश्वरस्योक्तौ, एवं सिद्धरूपमुपेयमुक्तम्। तदुपासन-शब्देनोपाय उक्तः। स पूर्वं विस्तृत इति नात्र विस्तृतः, उपेयस्य

प्रवृत्तं हि वेदान्तवाक्यजातम्—[1]'तत्त्वमसि' [2]'अयमात्मा ब्रह्म'[3]'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' [4]'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' [5]'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' [6]'ब्रह्मविदाप्नोति परम्' [7]'तमेवं विद्वानमृत इह भवति नान्यः पन्था अय-

---

प्राप्तिप्रकार उच्यते—(तत्फलभूतेत्यादिना) ज्ञापनशब्देन पूर्वोक्तानुशासनशब्दः स्पष्टार्थः। वेदान्तवाक्यजातशब्देनैकवाक्यमात्रपर्यालोचनं व्यावृत्तम्, ब्रह्मानुभवज्ञापन इति निर्देशेन वेदान्तवाक्यानामुपासनारूपकार्यप्रधानत्वशङ्का व्यावृत्ता। उक्तार्थविषयाणि तानि वाक्यान्याह— (तत्त्वमसीति) षड्विधतात्पर्यलिङ्गोपेतत्वात् तत्प्रथममुक्तम्। तत्र जीवविशेषस्य ब्रह्मतादात्म्यं प्रतिपन्नमिति जीवमात्रस्य ब्रह्मात्मकत्वपरं वाक्यमाह—(अयमात्मा ब्रह्मेति)। अथ घटकश्रुतिमाह—(य आत्मनीति) देवताविशेषनिर्णयार्थमाह—(एष इति) उपासनस्य वर्णाश्रमधर्मेतिकर्तव्यताकत्वे प्रमाणमाह (तमेतमिति) उपासनमेवोपाय इत्यत्र प्रमाणमाह—(ब्रह्मविदिति) ब्रह्मवित्—परमपुरुषोपासकः। उपायान्तरनिषेधमाह (तमेवमिति) आदिशब्देनोपासनशब्दान्वितवाक्यानि भेदश्रुतयश्च विवक्षिताः। एषु वाक्येषु जीवपरयोः स्वरूपं कथं प्रतिपन्नमित्याकाङ्क्षायामु-

---

१. छा० ६–९–४॥ २...॥ ३. बृ० ५–७॥ ४. सु० ७॥
५. बृ० ६–४–२२॥ ६. तै० आन. ७॥ ७. पु० ७॥

नाय विद्यत' इत्यादिकम् ।

जीवात्मनः स्वरूपं—देवमनुष्यादिप्रकृतिपरिणामविशेषरूपनानाविधभेदरहितं ज्ञानानन्दैकगुणम् । तस्यैतस्य कर्मकृतदेवादिभेदे विध्वस्ते स्व-

---

पबृंहणानुगृहीतश्रुतिप्रतिपन्नं तयोः स्वरूपं विवेचन् प्रथमं जीवात्मस्वरूपमाह— ( जीवात्मेति ) "तथात्मा प्रकृतेस्सङ्गादहंमानादिदूषितः । भजते प्राकृतान्धर्मानन्यस्तेभ्योऽपि सोऽव्ययः ॥ पुमांश्च देवो न नरो न पशुर्न च पादपः । शरीराकृतिभेदास्तु भूपैते कर्मयोनयः" इत्यादिषु प्रकृतिसङ्गाद्देवादिशरीरसङ्गादप्यनेकरूपत्वदर्शनात्, तदुभयवाक्यैककण्ठ्यं दर्शयन्नाह—( देवमनुष्यादिप्रकृतिपरिणामविशेषरूपेति ) 'प्रकृतिपरिणामनिबन्धनो विशेषः प्रकृतिपरिणामविशेषः तद्रूपः, नानाविधशब्देन बाह्यो देवमनुष्यादिष्ववान्तरभेद आन्तरः सुखित्वदुःखित्वाद्यवान्तरभेदश्च विवक्षितः । ज्ञानानन्दैकगुणमित्यनेन "निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः । दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः ॥" इत्यस्यार्थोऽभिप्रेतः, ज्ञानानन्दविशेषगुणकं ज्ञानत्वानन्दत्वादिगुणकं वा, न तु ज्ञानमात्रस्वरूपं । ननु कथं देवादिभेदराहित्यं ? प्रत्यक्षानुमानागमैः तथाहि प्रतिपत्तिरिति शङ्कायां प्रत्यक्षादीनि शरीरविशिष्टात्मविषयाणि, निष्कृष्टात्मविषयाणि वाक्यानि तु भेदराहित्यं वदन्तीत्यादि वदन्नभेदशङ्कां च परिहरति— ( तस्यैतस्येति ) अत्राद्वैतभ्रमास्पदानि कानिचिद्वचांसि व्याख्यातानि भवन्ति, तस्येति ज्ञानानन्दैकस्वरूपत्वं विवक्षितम्, एतस्येति शरीरसम्बन्धोऽभिप्रेतः, कर्मकृतदेवादिभेदे विध्वस्त इत्यनेन "एकस्वरूपभेदो हि बाह्यकर्मावृतिप्रजः । देवादिभेदे विध्वस्ते नास्त्येवावरणो हि सः" इत्यस्यार्थो विवृतो भवति । स्वरूपभेदो वाचामगोचरः स्वसंवेद्य इत्य-

रूपभेदो वाचामगोचरः स्वसंवेद्यः, ज्ञानस्वरूपमित्येतावदेव निर्देश्यम् । तच्च सर्वेषामात्मनां समानम् ।

एवंविधचिदचिदात्मकप्रपञ्चस्योद्भवस्थितिप्रलयसंसारनिवर्त्तनैकहेतुभूतः समस्तहेयप्रत्यनीक

नेन 'प्रत्यस्तमितभेदमित्या'दिवचनं व्याख्यातं भवति । एकस्वरूपेति ग्रन्थस्यायमर्थः—ज्ञानानन्दैकस्वरूपस्यात्मनो बुद्धिसुखाद्यान्तरभेदः संसारहेतुकर्मजन्यशरीराख्यावरणहेतुकः, देवादिशरीरभेदे विनष्टे सति नात्मनो भेदः, आवरणो हि सः—स हि देवादिशरीरभेद आवरणः, तस्मात्तन्नाशे तत्कृतभेदो नात्मनि विद्यत इत्यर्थः । अवरण इति पाठान्तरेऽर्थः स्पष्टः । प्रत्यस्तमितेत्यादिग्रन्थस्यायमेवार्थः—प्रत्यस्तमितदेवमनुष्यादिभेदं सत्तामात्रं न तु जन्मादिविकारास्पदम्, अत एवागोचरं वचसां—देवादिभेदवचसां जायत इत्यादिवचसां च अगोचरम् । तुच्छत्वव्यावृत्त्यर्थमाह(आत्मसंवेद्यमिति ) तच्च स्वरूपतो धर्मतश्च ज्ञानं तच्च ब्रह्मशब्दाभिलप्यमित्यर्थः, संसारदशायां यो व्यवहारः तदगोचरं चेत्—जानामीत्यपि तदानीं व्यवहारात् ज्ञानस्वरूपमित्यपि न वक्तुं शक्यम्, यदि शक्यं, तर्हि देवादिव्यवहारश्च शक्य इत्यत्राह ( ज्ञानस्वरूपमित्येतावदेव निर्देश्यमिति ) न ह्यौपाधिकाकारभेदे विध्वस्ते तद्वाचिशब्दागोचरत्वमिव स्वाभाविकरूपवाचिशब्दागोचरत्वमित्यर्थः, सर्वशब्दागोचरं चेद्वचसामगोचरमित्यपि न शक्यते वक्तुमिति भावः । तच्च सर्वेषामात्मनां समानमित्यनेन 'पुमानेकोऽव्ययः स्थित' इत्यादिष्वेकशब्दो व्याख्यातो भवति, 'तन्मनस्समतालम्बि कार्यं साम्यं हि मुक्तये' 'निर्दोषं हि समं ब्रह्म' इत्यादिवचनात् ॥

अथान्तर्यामिस्वरूपमाह ( एवंविधेति ) जीवस्वरूपस्य देवादिशरीरस्य च प्रस्तुतत्वादेवंविधेत्युक्तम् । यद्वा प्रत्यक्षादिप्रमाणप्र-

तयाऽनन्तकल्याणैकतानतया च स्वेतरसमस्तवस्तुविलक्षणस्वरूपोऽनवधिकातिशयासंख्येयकल्याणगुणगणः सर्वात्म-परब्रह्म-परज्योतिः-परतत्त्व-परमात्म-सदादि-शब्दभेदैर्निखिलवेदान्तवेद्यो भगवान्नारायणः पुरुषोत्तमः— इत्यन्तर्यामिस्वरूपम् ।

अस्य च वैभवप्रतिपादनपराः श्रुतयः स्वेतरसमस्तचिदचिद्वस्तुजातान्तरात्मतया निखिल-

---

सिद्धतयोक्तम् । उद्भवेत्यादिना जगत्कारणत्वमोक्षप्रदत्वे उक्ते, स्वेतरवैलक्षण्यं तृणादेरप्यस्तीति तद्व्यावृत्त्यर्थं शोधकवाक्योक्तोभयलिङ्गत्वेन वैलक्षण्यमुच्यते—(समस्तेत्यादिना) कल्याणशब्द—:आनन्दवाची, समस्तवस्तुविलक्षणस्वरूप इत्यत्र स्वरूपशब्देन विशेष्यांशोऽभिमतः; उपास्यत्वप्राप्यत्वोपयोगिगुणजाताभिप्रायेणाह— ( अनवधिकातिशयासङ्ख्येयकल्याणगुणगण इति ) सद्ब्रह्मात्मादिसाधारणशब्दैर्भगवन्नारायणपुरुषोत्तमाद्यसाधारणशब्दैश्चैक एवाभिधीयते इत्याह—( सर्वात्मेत्यादिना ) भगवच्छब्देन हेयप्रत्यनीकत्वं कल्याणगुणास्पदत्वं च विवक्षितम्, नारायणशब्देनोभयविभूतिमत्त्वम्, पुरुषोत्तमशब्देन विभूतिभूतचिदचिद्वैलक्षण्यम्-इत्यन्तर्यामिस्वरूपम्— इत्युक्तं भवति इत्यर्थः ।

भेदश्रुतेरर्थ उक्तः, अयं चाभेदश्रुतिविरुद्ध इति शङ्कायां तदैकार्थ्यमुच्यते—( अस्य चेत्यादिना ) अस्य—भेदश्रुतिप्रतिपन्नस्य वैभवप्रतिपादनपराः श्रुतय इति भेदश्रुत्यानुगुण्याद्घटकश्रुत्यैकार्थ्यात्सामानाधिकरण्यस्वाभाव्याच्चाभेदश्रुतयोऽपि तद्वैभवप्रतिपादिका इत्यभिप्रायः । सामानाधिकरण्यवाक्यस्य तद्वैभवप्रतिपादकत्वं कथमित्यत्राह--( स्वेतरेत्यादिना ) अन्तर्यामिणः परमात्मनः तदेकनियाम्यत्वेन कृत्स्नस्य शरीरत्वात्तद्वाचिनः शब्दाः शरीरिपर्यन्तमभिदधतीति समानाधिकरण-

नियमनं तच्छक्ति–तदंश–तद्विभूति–तद्रूप–तच्छरीर–तत्तनु–प्रभृतिभिः शब्दैस्तत्सामानाधिकरण्येन च प्रतिपादयन्ति ।

——:( शाङ्करमतसंक्षेपः ):——

तस्य वैभवप्रतिपादनपराणामेषां सामाना-

---

वाक्यैर्भिन्नप्रवृत्तिनिमित्तपदैर्व्यधिकरणवाक्यैश्च तद्वैभवमेव प्रतिपाद्यत इति सर्वश्रुतीनामैकार्थ्यमित्यर्थः, तन्नियमनं प्रतिपादयन्तीत्यन्वयः । "परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्, विष्णोरंशा द्विजोत्तम, विष्णोरेता विभूतयः, परस्य ब्रह्मणो रूपं, जगत्सर्वं शरीरं ते, तत्सर्वं वै हरेस्तनुः, तानि सर्वाणि तद्वपु"रित्यादिषु शक्त्यंशादिशब्दानां प्रयोगो द्रष्टव्यः । तच्छक्तितदंशेत्यादौ प्रतिपदं तच्छब्दप्रयोगावृत्तिरेकैकस्य निरपेक्षहेतुत्वाभिप्रायेण । यद्वा यं परमात्मानं प्रति यदेतज्जगच्छरीरमुच्यते तं प्रत्येव प्रति तदेवेदं जगच्छक्तिरंश इति चोच्यते, अत एव पितृत्वपुत्रत्ववत्प्रतिसम्बन्धिभेदादविरोधो दुर्वचः । अत एव शरीरादिशब्दानामेकार्थपरत्वेनाविरोधे वाच्ये शरीरशब्दानुगुणं शक्त्यादिशब्दानां अविरोधेनार्थो वर्णनीयः । 'अन्तरो यमयती'तिलक्षणपूर्वकं शरीरभावस्य मुख्यतयोक्तत्वात्, कार्योपयोगिविशेषणत्वाच्छक्तिः, विशिष्टे ब्रह्मणि विशेषणतयैकदेशत्वादंशः, नियाम्यत्वेन विभूतिः, व्याप्यत्वे सति नियाम्यत्वात् शरीरम्, अतस्सर्वेषामैकार्थ्यमित्यभिप्रायः, शरीरतनुशब्दोपादानं दृष्टान्ताभिप्रायेण कृतम्, शरीरतनुशब्दयोरिव शक्त्यादिशब्दानामविरोधो वर्णनीय इति भावः । एवं प्रथमश्लोकार्थ ईषद्विवृतः ॥

अथ द्वितीयश्लोकस्य पूर्वार्द्धस्य परपक्षत्रयोपन्यासपरस्यार्थं क्रमाद्विवरिष्यन्प्रथमं शाङ्करमतसंग्रहं विवृणोति– ( तस्य वैभवेत्या-

धिकरण्यादीनां विवरणे प्रवृत्ताः केचन—निर्विशेषज्ञानमात्रमेव ब्रह्म, तच्च नित्यमुक्तस्वप्रकाशस्वभावमपि तत्त्वमस्यादिसामानाधिकरण्यावगतजीवैक्यं, ब्रह्मैवाज्ञं बध्यते मुच्यते च, निर्विशेष-

---

दिना)-तस्य, एषाम्, इति पदद्वयस्यायमभिप्रायः— 'तस्य—भेदश्रुतिभिः समस्तचिदचिद्वस्तुविलक्षणतया प्रतिपन्नस्य ब्रह्मणः, एषां—भेदश्रुत्यानुगुण्यात्सामानाधिकरण्यस्वाभाव्यात् घटकश्रुत्यैकार्थ्याच्च तद्वैभवप्रतिपादनपराणाम्—इति भावः। आदिशब्देन घटकश्रुतयो विवक्षिताः भेदनिषेधश्रुतयो वा, एषां विवरणे प्रवृत्ताः केचनेत्यनेन विरोधः स्फोरितः। केचन वर्णयन्ति इत्यन्वयः, निर्विशेषज्ञानमात्रमेव ब्रह्मेति मात्रशब्देन क्वचिदंशे जडत्वव्यावृत्तिः, कार्त्स्न्येन ज्ञानमित्यर्थः। 'स यथा सैन्धवघन' इतिश्रुतिवाक्यार्थोऽत्राभिप्रेतः। यद्वा निर्विशेषशब्देन श्रौतनिषेधोऽभिप्रेतः, तेन ज्ञातृज्ञेयत्वरूपविशेषा गुणरूपविशेषाश्च निषिद्धा भवन्ति। ज्ञानशब्देन ज्ञानस्वरूपतोक्तिरूपार्थगुणनिषेधोऽभिप्रेतः, ज्ञानरूपस्यैव ज्ञातृत्वं ज्ञेयत्वं च सिद्धान्तिनोऽभिमतम्। अतस्तद्व्यावृत्त्यर्थं 'न दृष्टेर्द्रष्टारं' 'यस्यामत'मित्याद्युक्तज्ञातृत्वज्ञेयत्वनिषेधाभिप्रायो मात्रशब्दः, एवकारेण सविशेषत्वप्रतिपादकवाक्यानामतत्त्वावेदकत्वमभिप्रेतम्, स्वयाथात्म्याज्ञानपूर्वको बन्धः स्वप्रकाशे वस्तुनि न सम्भवति इति ब्रह्म नित्यमुक्तमेवेत्यत्राह—(नित्येति) वस्तुतो नित्यमुक्तस्वप्रकाशमपि जीवैक्यस्य समानाधिकरणवाक्यावगतत्वात् ब्रह्मैवाविद्यातिरोहितं भेदभ्रममनुभवतीति कल्प्यम्, अत एव बन्धश्च मोक्षश्च उपपन्न इत्यर्थः, जीवैक्यं श्रुतिसिद्धमभ्युपगतं चेच्छ्रुतिसिद्धेश्वरेशितव्यादिभेदोऽप्यभ्युपगन्तव्य इत्यत्राह—(निर्विशेषेति) अद्वैतवाक्यबलेन तेषां वाक्यानां मिथ्याविषयत्वमाश्रयणीयमित्यर्थः।

चिन्मात्रातिरेकीशेशितव्याद्यनन्तविकल्पस्वरूपं कृत्स्नं जगन्मिथ्या, कश्चिद्बद्धः कश्चिन्मुक्त इतीयं व्यवस्था न विद्यते, इतः पूर्वं केचन मुक्ता इत्ययमर्थो मिथ्या, एकमेव शरीरं जीववत् निर्जीवानीतराणि शरीराणि, तच्छरीरं किमिति न व्यवस्थितम् । आचार्यो ज्ञानोपदेष्टा मिथ्या, शास्त्रप्रमाता च मिथ्या, शास्त्रं च मिथ्या, शास्त्रजन्यं ज्ञानं च मिथ्या, एतत्सर्वं मिथ्याभूतेनैव शास्त्रेणावगम्यते— इति वर्णयन्ति ।

---

बद्धमुक्तव्यवस्थासिद्ध्यर्थमात्मभेदोऽभ्युपगन्तव्य इत्यत्राह—(कश्चिदिति) बद्धमुक्तव्यवस्था श्रुतिसिद्धत्वादङ्गीकार्या, शुकादयो हि मुक्ता इत्यत्राह— (इतः पूर्वमिति) चेष्टादिभिः सर्वशरीराणामात्मवत्त्वं सिद्धम्, तथा सति सुखदुःखादिव्यवस्थायां चात्मनि भेदेन बन्धमोक्षव्यवस्था स्यादित्यत्राह—(एकमेव शरीरमिति) जीवैक्ये सर्वशरीराणां सजीवत्वाभावात्सुखादिप्रतिसन्धानाभाव इत्यर्थः । एकस्य सजीवत्वं चैक्योपदेशबलात्स्वीकृतम्, एकमेव शरीरं सजीवं चेत् तच्छरीरको जीवः श्रवणमननादिभिर्लब्धाद्वैतज्ञानः स्यादिति बन्धो न स्यादित्यत्राह— (तच्छरीरं किमिति न व्यवस्थितमिति) इदं शरीरं सजीवम्, एतच्छरीरको जीवो ज्ञानवानिति निश्चेतुमशक्यमित्यर्थः । शिष्याचार्यव्यवस्थायामात्मबहुत्वं स्यात्, शास्त्रस्य च प्रामाण्याद्ब्रह्मव्यतिरिक्तं सत्यं स्यादित्यत्राह— (आचार्य इति) प्रमाता श्रोता विवक्षितः, एकैकमेव निरपेक्षं दूषणमिति ज्ञापनाय मिथ्याशब्दावृत्तिः, इति वर्णयन्ति, इति वर्णनशब्देन ग्रन्थप्रपञ्चोऽर्थवो-

—:( भास्करमतसंक्षेपः ):—

अपरे तु— अपहतपाप्मत्वादिसमस्तकल्याणगुणोपेतमपि ब्रह्म तेनैवैक्यावबोधेन केनचिदुपाधिविशेषेण संबद्धं बध्यते मुच्यते च; नानाविधमलरूपपरिणामास्पदं च—इति व्यवस्थिताः।

——:( यादवमतसंक्षेपः ):——

अन्ये पुनरैक्यावबोधयाथात्म्यं वर्णयन्तः स्वाभाविकनिरतिशयापरिमितोदारगुणसागरं

---

स्थयञ्च विवक्षितम् ॥ .... .... .... ....

अथ द्वितीयश्लोकपूर्वार्द्धस्थं भास्करमतोपन्याससंग्रहं विवृणोति— (अपर इत्यादिना) विवरणे प्रवृत्ता इत्यनुवर्तते, अपरे व्यवस्थिता इत्यन्वयः, प्रमाणसिद्धस्य बाधायोगात्सगुणत्वं तैरभ्युपगतमित्याह— ( अपहतपाप्मत्वादीति ) स्वतोऽपहतपाप्मत्वादियुक्तमपि ऐक्योपदेशान्यथानुपपत्त्या उपाधिसम्बन्धोऽभ्युपगत इत्याह— ( तेनैवेति ) ऐक्यावबोधेन व्यवस्थिता इत्यन्वयः, केनचित्—देवमनुष्याद्युपाधिष्वन्यतमेन, तथा सति बन्धमोक्षव्यवस्थाऽप्युपपद्यत इत्याह—(बध्यते मुच्यते चेति ) बध्यते—संसरति, एवं जीवत्वं ब्रह्मण उक्तम्। अथाचिद्रूपपरिणाममाह ( नानाविधेति ) मलरूपशब्दो दोषरूपत्वपरः॥

अथ यादवप्रकाशमतसङ्ग्रहं विवृणोति ( अन्ये पुनरित्यादिना ) ऐक्यावबोधयाथात्म्यं वर्णयन्त इत्युपालम्भः। यथाऽचिद्ब्रह्मणोः जीवब्रह्मणोश्चैक्यमेकरूपं प्रतिपन्नम्, तथा भेदोऽप्येकरूपः प्रतिपन्न इति अचिद्ब्रह्मणोर्भेदस्य स्वाभाविकत्वं जीवब्रह्मणोर्भेदस्यौपाधिकत्वं च न वाच्यम्, उभयत्र भेदः स्वाभाविक इति वर्णयन्त इत्यभिप्रायः। तत्रापि सगुणत्वाङ्गीकारमाह ( स्वाभाविकेति ) अपरिमितत्वम्—

ब्रह्मैव सुरनरतिर्यक्स्थावरनारकिस्वर्ग्यपवर्गिचेतनैकस्वभावं स्वभावतो विलक्षणमविलक्षणं च वियदादिनानाविधमलरूपपरिणामास्पदं च–इति प्रत्यवतिष्ठन्ते ।

——:( शाङ्करमतनिराकरणम् ):——

तत्र प्रथमे पक्षे श्रुत्यर्थपर्यालोचनपरा दुष्परिहारान् दोषानुदाहरन्ति, तथा हि– प्रकृतपरामर्शितच्छब्दावगतस्य ब्रह्मणः स्वसङ्कल्पकृतजगदुदयविभवलयादयः, "तदैक्षत बहु स्यां प्रजायेय" इत्यारभ्य "सन्मूलाः सोम्येमाः सर्वाः

---

असंख्येयत्वम्, उदारः–उत्कृष्टः प्रशस्यः तादृशो गुणसागरो गुणगणो यस्येति बहुव्रीहिः, जीवगताचिद्गताशुभास्पदत्वमाह– (सुरनरेति) स्पष्टम् ।

तत्रेत्यादिना द्वितीयश्लोकोत्तरार्द्धोक्तपरपक्षप्रतिक्षेपसंक्षेपं विवृणोति– ( श्रुत्यर्थपर्यालोचनपरा इति ) पर्यालोचनं–परित आलोचनम्, अभेदघटकसमानाधिकरणश्रुतितत्पौर्वापर्याद्यालोचनपराः, न त्वेकवाक्यमात्रतृप्ता इत्यर्थः । उदाहरन्ति– भगवद्यामुनाचार्या इति शेषः । तत्र प्रथमं 'तत्त्वमसी'ति वाक्यस्य निर्विशेषपरत्वे अनेकदूषणानि वक्ष्यन् पूर्वं तच्छब्दावगतगुणाबाधमाह (प्रकृतेत्यादिना) प्रकृतपरामर्शीति पदं हेतुगर्भं, तच्छब्दो गुणविशिष्टवाची प्रकृतपरामर्शित्वादित्यर्थः । कथं गुणानां प्रकृतत्वमित्यत्राह– ( स्वसंकल्पेति ) आदिशब्देनानुप्रवेशनामरूपव्याकरणादयो गृह्यन्ते, जगदुदयविभवलयादय एव तत्तद्वाक्यप्रतिपन्नतया विशेष्यन्ते, 'तदैक्षते'त्यादिना पदैः प्रतिपादिता– इत्यन्तेन तत्प्रकरणाधीतगुणा उक्ताः । सर्वशाखाप्रत्ययन्यायेन प्रकर-

प्रजाः सदायतनाः सत्प्रतिष्ठा' इत्यादिभिः पदैः प्रतिपादिताः; तत्सम्बन्धितया प्रकरणान्तरनिर्दिष्टाः सर्वज्ञता–सर्वशक्तित्व–सर्वेश्वरत्व–सर्वप्रकारत्व–समाभ्यधिकनिवृत्ति–सत्यकामत्व-सत्यसङ्कल्पत्व—सर्वावभासकत्वाद्यनवधिकातिशयासङ्ख्येयकल्याणगुणगणा 'अपहतपाप्मे'त्याद्यनेकवाक्यावगतनिरस्तनिखिलदोषता च सर्वे तस्मिन् पक्षे विहन्यन्ते ।

अथ स्यात्— उपक्रमेऽप्येकविज्ञानेन सर्व-

णान्तराकृष्टान् गुणानाह ( तत्संबन्धितयेति ) कारणवस्तुसंबन्धितया प्रकरणान्तरोक्ता गुणा गण्यन्ते ( सर्वज्ञतेत्यादिना ) "यस्सर्वज्ञस्सर्ववित्' 'पराऽस्य शक्तिर्विविधैव श्रूयते' 'स ईशोऽस्य जगतो नित्यमेव' 'नान्यो हेतुर्विद्यत ईशनाय' 'न तत्समश्चाभ्यधिकश्च दृश्यते' 'सत्यकामः सत्यसंकल्पः' 'तस्य भासा सर्वमिदं विभाति" इत्यादिवाक्येष्वमी सर्वज्ञतादिगुणा द्रष्टव्याः । एकैकमनवधिकातिशयाः कल्याणगुणा असंख्येया इत्याह– ( अनवधिकेति ) हेयप्रत्यनीकत्वमाह–( अपहतपाप्मेति ) अमी गुणास्सर्वे सृष्ट्युपयोगित्वेन प्रकरणान्तरोक्ता आकृष्टा भवन्ति, समाभ्यधिकनिवृत्तौ सत्यां तदेककारणत्वसिद्धिः । सर्वावभासकत्वं च सृष्टजगत्स्थित्युपयोगित्वेन कारणत्वापेक्षितम्, हेयप्रत्यनीकत्वं च सर्गाद्युपयोगि, हेयास्पदत्वे कर्मवश्यत्वेन स्वातन्त्र्यादिभङ्गप्रसङ्गात्, ते सर्वे तच्छब्दावगता विहन्यन्त इत्यर्थः ॥

(अथ स्यादित्यादि) उपक्रमशब्देनोपक्रमोपक्रमो विवक्षितः, तत्र

विज्ञानमुखेन कारणस्यैव सत्यतां प्रतिज्ञाय तस्य कारणभूतस्यैव सत्यतां विकारजातस्य चासत्यतां मृद्दृष्टान्तेन दर्शयित्वा सत्यभूतस्यैव ब्रह्मणः [1]"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय"मिति सजातीयविजातीयनिखिलभेदनिरसनेन निर्विशेषतैव प्रतिपादिता, एतच्छोधकानि प्रकरणान्तरगतवाक्यान्यपि [2]"सत्यं ज्ञानमनन्तं ब्रह्म", [3]निष्कलं, [4]निष्क्रियं, [5]निर्गुणं, [6]विज्ञानम्,

---

मसी'ति वाक्यापेक्षया 'तदैक्षते'ति वाक्यस्योपक्रमत्वेऽपि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं तस्याप्युपक्रमभूतमित्यभिप्रायः (एकविज्ञानेन सर्वविज्ञानमुखेन कारणस्यैव सत्यतां प्रतिज्ञायेति) एकविज्ञानेन सर्वविज्ञानद्वारा एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया कारणस्यैव सत्यत्वं फलितमित्यर्थः । कारणस्यैव सत्यत्वं दृष्टान्तवाक्ये कण्ठोक्तमित्याह– (तस्येति) दार्ष्टान्तिकवाक्येऽपि निर्विशेषपरत्वमुक्तमित्याह– (सत्यभूतस्येति) निखिलभेदशब्देन स्वगतभेदो विवक्षितः, विजातीयभेदानन्तर्गतत्वात्स्वगतभेदस्य । शोधकवाक्यानामपि निर्विशेषपरत्वमाह– (एतदिति) एतच्छोधकानि कारणवाक्यावगतस्य शोधकत्वात् तदैकार्थ्येन निर्विशेषपराणीत्यर्थः । सामानाधिकरण्यासंभाव्यात् 'निर्गुण'मित्यादिशोधकवाक्यान्तरैकार्थ्याच्च 'सत्यं ज्ञानं' 'विज्ञानमानन्द'मित्यादीनि शोधकवाक्यानि निर्विशेषपराणीत्यभिप्रायेणाह– (सत्यं ज्ञानमिति) सत्यादिपदानां

---

१. छा० ६–२–१ ॥ २. तै० आन. १ ॥ ३... ॥ ४. आत्मा० ॥
५. सै० १०–४ ॥ ६. तै० आ० १ ॥

आनन्द"मित्यादीनि सर्वविशेषप्रत्यनीकैकाकारतां बोधयन्ति। —

न च—एकाकारतावबोधनेऽपि पदानां पर्यायता, एकत्वेऽपि वस्तुनः सर्वविशेषप्रत्यनीकाकारत्वोपस्थापनेन सर्वपदानामर्थवत्त्वात्—इति।

नैतदेवम्—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सेत्स्यति, सत्यमिथ्यात्वयोरेकताप्रसक्तिर्वा, अपि

---

निर्विशेषवस्तुपरत्वे प्रवृत्तिनिमित्तभेदाभावात् सामानाधिकरण्यलक्षणहानिरित्यत्राह—(सर्वविशेषप्रत्यनीकेति) प्रतियोगिविशेषाः प्रवृत्तिनिमित्तानीत्यर्थः। तर्हि तद्व्यावृत्तिरूपधर्म्मः स्यादित्यत्राह—(एकाकारतामिति) आकारशब्दः स्वरूपवाची स्वरूपमेव व्यावृत्तिरिति भावः॥

निर्विशेषवस्तुपरत्वे पदानां पर्यायता स्यादिति पर्यायत्वाशङ्कां परिहरति (न चेति) कुत इत्यत्राह (एकत्वेऽपीति) अर्थवत्त्वात्—प्रयोजनवत्त्वात्॥

अथ सिद्धान्तमाह—(नैतदेवमिति) एकविज्ञानं सर्वविज्ञानं च किमेकं ज्ञानम्? उत ज्ञानद्वयम्?। एकत्वे किमेकविज्ञानेन सर्वविज्ञानं सर्वस्याभावादुच्यते? उतैकस्य सर्वस्य च तादात्म्यादिति विकल्पमभिप्रेत्य प्रथमं दूषयति (एकेति) एकेत्यादि स्पष्टम्, (न सेत्स्यति इति) सर्वशब्दस्य सर्वाभाववाचित्वाभावादिति भावः। द्वितीयं दूषयति (सत्यमिथ्यात्वयोरेकताप्रसक्तिर्वेति) जगतः सत्यत्वं ब्रह्मणो मिथ्यात्वं वेत्यर्थः, द्वित्वपक्षे च एकविज्ञानेन सर्वविज्ञानं स्थालीपुलाकन्यायेन सर्वस्यैकसाध-

त्वेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा सर्वस्य तदात्मकत्वेनैव सत्यत्वे सिद्ध्यति ।

---

र्म्याद्यदि स्यात्, तत् त्वन्मते न युक्तम्, कार्यस्यासत्यत्वात्, एकवैधर्म्याद्वा स्यात्, देवदत्तप्राधान्यज्ञानेनेतरेषामप्रधानतया ज्ञातत्ववत् तदानीं त्वन्मते मिथ्यात्वेनेत्यध्याहारः स्यात् । ज्ञातव्याभावेन निवृत्तिलक्षणा वा स्यात्, ज्ञानद्वयवैरूप्यादस्वारस्यं चेत्यभिप्रायः । (अपि त्विति) न हि घटपटयोः सत्यत्वेऽपि घटज्ञानेन पटो ज्ञातो भवतीति तद्व्यावृत्तिमाह (सर्वस्य तदात्मकत्वेनैव सत्यत्व इति) ब्रह्मात्मकत्वेनैव सत्यत्व इत्यर्थः । न हि कारणावस्थे ब्रह्मणि ज्ञाते कार्य्यावस्था ज्ञाता भवतीति चेत्, उच्यते— न हि विशेषणान्तरविशिष्टाकारे विशेषणान्तरान्वयः, अपि त्वेकस्मिन्धर्म्मिणि विशेषणद्वयान्वयो विवक्षितः, तस्मान्न ज्ञातत्वविशिष्टाकारेण सर्वत्वम्, सर्वत्वविशिष्टाकारेण ज्ञातता वा, किंतु सर्वत्वं ज्ञातत्वं चैकाश्रयवर्त्तिनी इति, अवस्थानवगमेऽपि धर्म्मिण ऐक्येन ज्ञाततया प्रयोगो मुख्य एव दृष्टः सोऽयं देवदत्तः पूर्वमेव मयाऽयं ज्ञात इत्यादिषु, न हि तत्र वर्तमानकालविशिष्टत्वेन पूर्वं ज्ञातः, तस्मात्परिषद्दर्शनेनामी पुरुषा दृष्टा इतिवदिदमुपपन्नम् । एकस्य सत्यत्वज्ञानेन तद्व्यतिरिक्तं मिथ्यात्वेन ज्ञातं भवतीति चेत्, न 'येनाश्रुतं श्रुतं भवती'त्यादिषु वाक्येषु मिथ्यात्वेनेत्यध्याहारः, एकविज्ञानस्य सर्वविज्ञानस्य च वैरूप्यम्, अमुख्यत्वं च, ज्ञात्रभावात्, न हि सर्वं मिथ्यात्वेन जानन् कश्चित् कश्चित् ज्ञाताऽस्ति, तस्मात्सर्वविज्ञानशब्देन सर्वज्ञाननिवृत्तिलक्षणा स्यादिति ॥

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं किम् ?, तदात्मकत्वेनैव सत्यत्वं कथं । तथा सति कथं प्रतिज्ञोपपत्तिः ? उपक्रमैवाक्यं सत्यत्वपक्षानुगुणमपि तदुपसंहारापेक्षया प्रबलम्, न तु महावाक्यस्वारस्या

अयमर्थः—श्वेतकेतुं प्रत्याह—"स्तब्धोऽस्युत तमादेशमप्राक्ष्यः" इति, परिपूर्ण इव लक्ष्यसे तानाचार्यान्प्रति तमप्यादेशं पृष्टवानसीति, आदिश्यतेऽनेनेत्यादेशः, आदेशः—प्रशासनम्,

---

पेक्षया, महावाक्यं च मिथ्यात्वपक्षानुगुणं 'तत्वमसि' 'मृत्तिकेत्येव सत्यं' 'सदेवैकमेवे' त्यादिषु तथा प्रतीतेरिति शङ्कायामाह (अयमर्थ इति) प्रतिज्ञावाक्योपक्रमभूतं स्तब्धोऽसीति वाक्यमारभ्य व्याख्यातुं स्तब्धोऽसीति श्रूयमाणमध्यमपुरुषार्थस्पष्टयार्थमाह (श्वेतकेतुं प्रत्याहेति) स्तब्धोऽसीत्यादि श्रुतिवाक्योपादानम्, तत्र वाक्ये स्तब्धोऽसीत्यस्यार्थमाह—(परिपूर्ण इव लक्ष्यस इति) प्रेच्छतिधातुर्द्विकर्मकः— वक्तृकर्मकः वाच्यकर्मकश्चेति, तत्रादेशशब्दाभिहितं वाच्यं कर्मेति दर्शयितुं तानाचार्यान् प्रतीति वक्तृकर्म अध्याहृतम्, 'न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्येतदवेदिष्यन्कथं मे नावक्ष्य'न्निति तच्छब्दनिर्दिष्टा आचार्या अत्र स्मारिताः, तानिति बहुवचनेन तमादेशमिति तच्छब्दस्याचार्यविषयत्वशङ्काव्युदासः । तमपीति श्रोतुर्दुर्लभत्वमित्यपिशब्दाभिप्रायः । कर्मादिश्रोतव्यान्तरसमुच्चयो वाऽभिप्रेत इति श्वेतकेतुं प्रत्याहेत्यन्वयः । आदेशशब्दं व्याचष्टे (आदिश्यत इत्यादिना) आदिश्यतेऽनेनेत्यादेश इति प्रत्ययार्थव्याख्यानम् । आदेशः प्रशासनमिति प्रकृत्यर्थव्याख्यानम्, अत्र 'अकर्तरि च कारके संज्ञाया'मिति घञः कर्तृव्यतिरिक्तकारके विहितत्वाद्ब्रह्मणश्च प्रशासने कर्तृत्वादुपदेशकर्मत्वोपपत्तेश्च प्रकृत्यर्थः उपदेशः प्रत्ययार्थः कर्म चेति परैर्व्याख्यातम्, तत्र प्रकृत्यर्थास्वारस्यं प्रत्ययार्थस्वारस्यम्, असत्पक्षे प्रकृत्यर्थस्वारस्यम् प्रत्ययार्थास्वारस्यम्, कर्तृव्यतिरिक्तकारकविषयस्य घञः कथं कर्त्र-

[1]"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिभिरैकार्थ्यात्, तथा च मानवं वचः [2]"प्रशासितारं सर्वेषा'मित्यादि. अत्राप्येकमेवेति जगदुपादानतां प्रतिपाद्य अद्वितीयपदेनाधिष्ठात्रन्तरनिवारणादस्यैवाधिष्ठातृत्वमपि

र्थत्वम् ? 'विवक्षातः कारकाणि भवन्ती'ति न्यायेन कर्तुरेव करणान्तरनिरपेक्षत्वलक्षणेन करणसाधर्म्यरूपेण साधकतमत्वेन करणत्वविवक्षया घञ्प्रत्यय उपपद्यते, एतदभिप्रायेण हि आदिश्यतेऽनेनेत्युक्तं, न त्वादिशतीति, विवक्षया कारकप्रवृत्तिश्चेदकर्त्तरीति विधानस्य किं प्रयोजनम् ? स्वतः प्राप्तत्वं कर्तृव्यतिरिक्तकारकस्य, कर्तरि करणत्वादिविवक्षया कर्त्रर्थत्वमस्वरसमिति विभागः प्रयोजनम्, सूत्रस्य प्रयोजनवत्त्वेऽपि स्वारस्यमस्वारस्यं च तुल्यं चेत्, किमनेन योजनान्तरेणेति चेत्, उच्यते—परपक्षे प्रत्ययार्थस्यैव स्वारस्यम्, अस्मत्पक्षे तु स्वारस्यद्वयमस्ति—अर्थस्वारस्यं शब्दस्वारस्यं चेति, प्रकृत्यर्थस्वारस्यं तावत् सिद्धम्, विवक्षितविशेषणस्यासाधारणाकाराभिधानं स्वतः प्राप्तम्, सर्वप्रशासितृत्वं ब्रह्मासाधारणधर्मः, उपदेश्यत्वं तु कर्मस्वरूपादेः साधारणम्, किंचापेक्षितविधेरनपेक्षितविधानं दुर्बलमिति न्यायादत्रावश्यापेक्षितप्रशासितृत्वज्ञापनमेव युक्तम्, नानपेक्षितोपदेश्यत्वज्ञापनम् तस्माच्छब्दस्वारस्यमर्थस्वारस्यं चेति स्वारस्यद्वयविभवादयमेवार्थः। ब्रह्मणः कृत्स्नप्रशासितृत्वे सिद्धे हि तदत्रासाधारणाकारतया वक्तव्यम्, तत्र किं प्रमाणमित्यत्राह (एतस्य वा इति) स्मृतिमाह (प्रशासितारमिति) न केवलं श्रुत्यन्तरेष्वेव प्रशासितृत्वप्रसिद्धिः अस्मिन्प्रकरणेऽपि सिद्धमित्याह (अत्रापीति) अधिष्ठातृत्वं हि प्रेरकत्वम्, तच्च

१. बृ० ५-८-९॥ २. मनु० १२-१-२२

प्रतिपाद्यते, अतस्त्वं प्रशासितारं जगदुपादानभूतमपि पृष्टवानसि, येन श्रुतेन मतेन विज्ञातेनाश्रुतममतमविज्ञातं श्रुतं मतं विज्ञातं भवति इत्युक्तं स्यात्, निखिलजगदुदयविभवविलयादिकारणभूतं सर्वज्ञत्व-सत्यकामत्व-सत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरं किं ब्रह्म त्वया श्रुतमिति

---

प्रशासितृत्वमिति तत्फलितमित्यर्थः, एवमादेशशब्दार्थ उक्तः । अथ तच्छब्दं च विवृण्वन्वाक्यार्थं च योजयति ( अत इति ) येन विज्ञातं भवति तं पृष्टवानसीत्यन्वयः, येन श्रुतेन मतेन विज्ञातेनेत्यध्याहारेण योजनायाः को हेतुः ? उच्यते— न हि ब्रह्मणः सत्तया कृत्स्नं ज्ञातं भवति, अपि तु तद्विज्ञानेनैव विज्ञातं भवतीति वस्तुसामर्थ्यात् । किञ्च दृष्टान्तेऽपि न हि मृत्पिण्डसत्तया घटादिर्विज्ञातो भवति, अपि तु तद्विज्ञानेनेति दृष्टान्तसामर्थ्यात् । किंच 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातं स्यात्' 'कस्मिन् नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इत्यादिश्रुत्या च, एवं दृष्टान्तसामर्थ्यात् दार्ष्टान्तिकसामर्थ्याच्च श्रुत्यन्तरकण्ठोक्त्या चैवं व्याख्यातमित्युक्तं स्यादिति, कण्ठोक्त्या चाभिप्रेततया अयमेवास्याः श्रुतेरर्थ इत्यभिप्रायः । नन्वस्मिन्वाक्य उपादानत्वं हि न कण्ठोक्तं किं तु फलितम्, कारणत्वं ज्ञातत्वं च न कण्ठोक्तम्, अत्र जगत्कारणत्वाद्यभिप्रायस्य किं प्रयोजनमित्यपेक्षायामाह ( निखिलजगदिति ) श्रुत्यन्तरेषु 'यतो वा इमानि' इत्यादिवाक्येषु जगत्कारणत्वलक्षणकं ब्रह्मावगतम्, तस्मादत्र जगत्कारणत्वगर्भं वदतः पितुस्त्वया किं ब्रह्म श्रुतमित्यभिप्राय इत्यर्थः ।

. अप्राक्ष्य इति प्रश्नोक्तिः तत्पूर्वकश्रवणाभिप्रायेणेत्याशयवानाह—

हार्दो भावः ।

तस्य निखिलकारणतया कारणमेव नाना-संस्थानविशेषसंस्थितं कार्य्यमित्युच्यत इति कारणभूतसूक्ष्मचिदचिद्वस्तुशरीरकब्रह्मविज्ञानेन कार्यभूतमखिलं जगद्विज्ञातं भवतीति हृदि निधाय [1]"येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्या"दिति पुत्रं प्रति पृष्टवान् पिता। तदे-

(त्वया श्रुतमिति) नात्र ब्रह्मेति कण्ठोक्तम्, तस्मात् जगत्कारणत्वां-न्तर्भावप्रयोजनब्रह्मश्रवणप्रश्नः कृतो भवति, सर्वज्ञत्वादिगुणाः कार-णत्वोपयोगितयोक्ताः, सृष्ट्यादयः परिपूर्णस्यैव लीलाः, अतस्सत्य-कामत्वस्य कारणत्वोपयोगः। हार्दो भावः—हृदि निहितं तात्पर्यमित्यर्थः ।

कारणत्वे सत्यप्येकविज्ञानेन सर्वविज्ञानं नोपपद्यते, कारणा-त्कार्यस्य द्रव्यान्तरत्वात्, कारणत्वं च नोपपद्यते, तथा सति ब्रह्मणो-हेयास्पदत्वप्रसङ्गात्, कारणत्वोपपत्तावप्येकविज्ञानेन सर्ववि-ज्ञानं नोपपद्यते, नानाजातीयकार्याणां नानाजातीयकारणकत्व-दर्शनादित्यत्राह (तस्येति) तस्य निखिलकारणतया कार्यभूतम-खिलं जगद्विज्ञातं भवतीत्यन्वयः। कारणात्कार्यस्यानन्यत्वमाह (कारणमेवेति) नानासंस्थानविशेषसंस्थितम्— संस्थानविशेषविशिष्ट-मित्यर्थः। सूक्ष्मचिदचिद्वस्तुशरीरकशब्देन ब्रह्मणो हेयास्पदत्वप्रसङ्गः परिहृतः। निर्वेदादुपसन्नाय वक्तव्यमर्थं स्वयमेव कथं वदतीत्यत्राह (पुत्रं प्रति पृष्टवान् पितेति) पुत्रव्यतिरिक्तानां शुश्रूषाद्यपेक्षा, पुत्रस्य तु पुत्रत्वमेव ब्रह्मोपदेशहेतुरिति शास्त्रार्थः सूचितः। पुत्रपितृ-

[1] छा० ६-१-३ ॥

तत् सकलस्य वस्तुजातस्यैककारणत्वं पितृहृदि निहितमजानन्पुत्रः परस्परंविलक्षणेषु वस्तुष्व-न्यस्य विज्ञानेन तदन्यविज्ञानस्याघटमानतां बुद्ध्वा परिचोदयति 'कथं नु भगवः स आदेशः' इति। परिचोदितः पुनस्तदेव हृदि निहितं ज्ञाना-नन्दामलत्वैकस्वरूपमपरिच्छेद्यमाहात्म्यं सत्यस-ङ्कल्पत्वमिश्रैरनवधिकातिशयासंख्येयकल्याणगु-

---

शब्दाभ्याम् 'उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच' 'तं ह पितोवाचेति' श्रुतिवाक्यं स्मारितम्, अनन्तरमिदं वाक्यं 'कथं नु भगवस्स आदेशः' इति । इदं किं प्रश्नरूपम् ? उत चोद्यरूपम् ? इति संशये चोद्यरूपमिति व्याचष्टे– ( तदेतदित्यादिना ) प्रतिवचनप्रकारेण प्रश्नार्थो विज्ञायते, प्रतिवचने 'यथा सोम्यैकेने'त्यादिना दृष्टान्तैरुप-पादनादिदं चोद्यरूपमित्यभिप्रायः । ( परिचोदयति इति ) विव-क्षितविशेषकण्ठोक्तिमकुर्वन् सामान्येन चोदयतीत्यर्थः ।

वाक्यमुपादत्ते ( कथं न्विति ) अथ पिता ब्रह्मणो जगत्कार-णत्वं तदुपयोगिगुणजातं उपादानत्वनिमित्तत्वप्रयुक्तदोपशङ्कापरि-हारं च विवक्षन्कारणज्ञानेन कार्यविज्ञानं लोकसिद्धं दर्शयतीत्याह ( परिचोदितः पुनरित्यादिना ) ज्ञानानन्दामलत्वैकस्वरूपमिति 'विज्ञा-नमानन्दं ब्रह्मे'त्यादिशोधकवाक्यार्थो विवक्षितः । स्वरूपशब्दो धर्मिस्वरूपनिरूपकधर्मवाची, अपरिच्छेद्यमाहात्म्यमित्यनेनानन्त-शब्दार्थो विवक्षितः, स्वरूपमपरिच्छिन्नमित्यर्थः । गुणतोऽप्यानन्त्य-माह ( सत्यसङ्कल्पत्वमिश्रैरिति ) । सत्यशब्दार्थमाह ( अविकारस्व-रूपमिति ) अत्र स्वरूपशब्दो विशेष्यांशपरः । एवमविकारित्वादि-

गणैर्जुष्टमविकारस्वरूपं परं ब्रह्मैव नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरं स्वलीलायै स्वसङ्कल्पेनाऽनन्तविचित्रस्थिरत्रसरूपजगत्संस्थान-स्वांशेनावस्थितमिति तज्ज्ञानेनान्यस्य निखिलस्य ज्ञाततां ब्रुवन् लोकदृष्टं कार्यकारणयोरनन्यत्वं दर्शयितुं दृष्टान्तमाह-- [1]"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति, एकमेव मृद्द्रव्यं स्वैकदेशेन नानाव्यवहा-

---

श्रुतेर्विषयो दर्शितः । उपादानत्वप्रयुक्तविकारादिविपक्षं दर्शयति (नामरूपेति) पूर्वं सूक्ष्मचिदचिद्वस्तुशरीरकमित्येतावदुक्तम्, अत्र नामरूपविभागानर्हशब्देन सूक्ष्मशब्दो व्याख्यातः, अनेनोपादानत्वप्रयुक्तं चोद्यं परिहृतम् । अथ निमित्तत्वप्रयुक्तं चोद्यं परिहरति (स्वलीलायै इति) अवाप्तसमस्तकामस्यापि लीलार्थं जगद्व्यापार उपपद्यत इत्यर्थः । महायासरूपजगद्व्यापारस्य न लीलात्वमिति चेत्तत्राह (स्वसङ्कल्पेनेति) सङ्कल्पमात्रसाध्यत्वान्नायं महायास इत्यर्थः । स्वांशेन--विशिष्टस्य स्वस्यांशेन, ब्रुवन्--वक्तुम्, (लोकदृष्टं कार्यकारणयोरनन्यत्वं दर्शयितुं दृष्टान्तमाहेति) कार्यकारणयोरनन्यत्वे दृष्टान्तमाहेत्यर्थः । अन्यत्वनिबन्धनचोद्यस्यानन्यत्वज्ञापनेन हि परिहार इति भावः । दृष्टान्तवाक्यमुपादत्ते (यथा सोम्यैकेन मृत्पिण्डेनेति) तत्र कारणज्ञानेन कार्यविज्ञानस्य सिद्धये तयोरैक्योपपादकमुत्तरखण्डं प्रथमं व्याचष्टे (एकमेवेति) तत्र वाचेति पदं व्याचष्टे, (नानाव्यवहा-

---

1. छा० ६-१-४ ॥

रास्पदत्वाय घटशरावादिनानासंस्थानावस्थारूपविकारापन्नं नानानामधेयमपि मृत्तिकासंस्थानविशेषत्वात् मृद्द्रव्यमेवेत्थमवस्थितम्, न वस्त्वन्तरमिति, यथा मृत्पिण्डविज्ञानेन तत्संस्थानविशेषरूपं घटशरावादि सर्वं ज्ञातमेव भवतीत्यर्थः। ततः कृत्स्नस्य जगतो ब्रह्मैककारणतामजानन्पुत्रः पृच्छति[1] 'भगवांस्त्वेव मे तद्ब्रवीतु' इति। ततः सर्वज्ञं सर्वशक्ति ब्रह्मैव सर्वकारणमित्युपदिशन् स होवाच[2] 'सदेव सोम्येदमग्र आसीदेकमे-

रास्पदत्वायेति ) वाक्शब्दोऽजहल्लक्षणया वाक्पूर्वकव्यवहारे वर्तते, वाक्पूर्वव्यवहारश्च प्रयोजनतया हेतुरित्यर्थः। विकारशब्दार्थमाह ( घटशरावेत्यादिना ) संस्थानमेवावस्था, सैव विकारः, ' षोडशकश्च विकारः' इत्यादिषु विकारशब्दस्यावस्थावद्द्रव्यपरत्वेन प्रयोगदर्शनात् तद्व्यावृत्त्यर्थमवस्थारूपविकार इत्युक्तम् , नामधेयपदं व्याचष्टे ( नानानामधेयमिति ) मृत्तिकेति पदं व्याचष्टे ( मृत्तिकासंस्थानविशेषत्वादिना ) एवकारेण व्यावर्त्यमाह ( न वस्त्वन्तरमितीति ) एवं कारणज्ञानेन कार्यज्ञानस्य उपपादकमुत्तरखण्डं व्याख्याय तदुपपाद्यपूर्वखण्डं व्याचष्टे ( यथेति ) लोके कारणज्ञानात्कार्यज्ञानं सम्भवतु तथाऽप्येकविज्ञानेन सर्वविज्ञानं नोपपद्यते, विजातीयकार्याणामेककारणकत्वायोगादिति बुद्ध्वा ब्रह्मैककारणत्वाज्ञानेन पुत्रः पृच्छतीत्याह ( तत इत्यादिना ) विजातीयानामपि सर्वकार्याणां ब्रह्मैवोपादानं तदेव च निमित्तमित्युपदिदेशेत्याह. ( ततः सर्वज्ञमिति )

१. छा० ६-१-७ ॥ २. छा० ६-२-२ ॥

वाद्वितीयम्” इति, अत्रेदमिति जगन्निर्दिष्टम्, अग्र इति च सृष्टेः पूर्वकालः, तस्मिन्काले जगतः सदात्मकतां सदेवेति प्रतिपाद्य तत्सृष्टिकालेऽप्यविशिष्टमिति कृत्वा 'एकमेवे'ति सदापन्नस्य जगतस्तदानीमविभक्तनामरूपतां प्रतिपाद्य तत्प्रतिपादनेनैव सतो जगदुपादानत्वं प्रतिपादितमिति, स्वव्यतिरिक्तनिमित्तकारणमद्वितीयपदेन

---

उपदिशन्– उपदेष्टुं 'सदेवे'ति वाक्योपादानम्, (इदमिति जगन्निर्दिष्टमिति) प्रकृतमस्ति चेत् तत्परत्वम्, अन्यथा प्रत्यक्षादिप्रमाणप्रसिद्धजगत्परत्वमेवेदं शब्दस्योचितमिति भावः। (अग्रः इत्यादि) अनन्तरं सृष्टेर्वक्ष्यमाणत्वादग्रशब्दस्य प्रलयकालपरत्वमवगम्यत इति भावः। (तस्मिन्काले जगतः सदात्मकतां सदेवेति प्रतिपाद्येति) सदात्मकताम्–कारणात्मकताम्, 'सदेवे'त्यनेन वैशेषिकोक्तं कदाचित्सत्त्वं कदाचिदसत्त्वं च व्यावृत्तम्, तेन प्रलयकालेऽपि सत्त्वं फलितमित्येवमुक्तं, न तु वाचनिकोऽयमर्थः। सदेवेदमग्र एकमेवासीदिति ह्यन्वयः। सच्छब्दः प्रमाणसम्बन्धार्हत्वोपाधिना प्रकृतिपुरुषकालविशिष्टं ब्रह्माह। कारणात्कार्यस्यान्यत्वेन जगतः कदाचित्सत्त्वं परैरुक्तम्, कारणभूतब्रह्मानन्यत्वेन जगतो नित्यसत्त्वमित्यर्थः (तत्सृष्टिकालेऽपीति) जगत्सदेव चेत्प्रलये को विशेष इत्यपेक्षायां द्रव्यं नित्यमेव, तस्याविभक्तनामरूपावस्था प्रलयः, विभक्तनामरूपावस्था कार्यता, इति वैषम्यमेकमेवेति पदेनोक्तं भवतीत्यर्थः, अनेन ब्रह्मण उपादानत्वं फलितमित्याह (तत्प्रतिपादनेनैवेति) भाव्यवस्थाविशेषवतः प्रागवस्थायोगो ह्युपादानत्वम्, तस्माद्वक्ष्यमाणबहुत्वावस्थायाः पूर्वावस्थाकथनेनोपादा-

प्रतिषिद्धमिति, 'तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवती'ति-आदावेव प्रशासितैव जगदुपादानमिति हृदि निहितम् इदानीं सुव्यक्तम् । एतदेवोपपादयति- स्वयमेव जगदुपादानं जगन्निमित्तं च सत् ¹'तदैक्षत बहु स्यां प्रजायेये'ति तदेतत्त्वच्छ-

न्दत्वमुक्तं भवतीत्यर्थः, कृत्स्नस्य कार्यस्य ब्रह्मैवोपादानमस्तु, तथाप्येकविज्ञानेन सर्वविज्ञानं नोपपद्यते, निमित्तान्तरसम्भवात्, इति शङ्कायां तस्यैव निमित्तत्वेन निमित्तान्तरशङ्कामद्वितीयपदं व्यवर्तयतीत्याह (स्वव्यतिरिक्तेति) कुलालस्य विविधपरिणामशक्तिवैकल्येनानुपादानत्वम्, मृत्पिण्डस्य ज्ञातृत्वविरहादनिमित्तत्वम्, अत्र तूभयसद्भावाद्ब्रह्मैवोभयकारणमित्यर्थः। उक्तार्थस्योपक्रमसङ्गतत्वमाह (तमादेशमिति) आदेशशब्देन प्रेरयितृत्वं कण्ठोक्तम्, 'येनाश्रुतम् श्रुतम्' इत्यादिप्रतिज्ञानेनोपादानत्वमभिप्रेतम्, तदुभयमत्र स्फुटमित्यर्थः। अत्रासत्कार्यवादोपन्यासपरिहारार्थं वाक्यं द्वितीययोजनायां व्याख्यास्यत इति नात्रोदाहृतम् । अथ तदनन्तरवाक्यं पूरकपदान्तरैः सहोपादत्ते (स्वयमेवेति) सदेवेत्यादिवाक्यं सजातीयविजातीयादिभेदनिषेधपरत्वेन परैर्व्याख्यातम्, तदुत्तरवाक्याननुगुणम्, अस्मदुक्तार्थस्यैवोपपादकान्युत्तरवाक्यानीत्यभिप्रायेण जगदुपादानं जगन्निमित्तं च सदिति विशेषणद्वयोपादानम् । एतद्व्याचष्टे ( तदेतदित्यादिना ) वक्ष्यमाणसृष्ट्युपपादकविशेषणान्याह (सर्वज्ञमित्यादिना) अवाप्तसमस्तकामस्य प्रवृत्त्यनुपपत्तिं परिहरति (अवाप्तसमस्तकाममपि लीलार्थमिति) सङ्कल्पमात्रसाध्यत्वान्न जगद्व्यापार आयासरूप इत्यभिप्रायेण सत्यसङ्कल्पमित्युक्तम्, 'अजायमानो बहुधा विजायते' इत्युक्तावताररू-

¹ छा० ६-२-३ ॥

च्छब्दवाच्यं परं ब्रह्मैव सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पमवाप्तसमस्तकाममपि लीलार्थं विचित्रानन्तचिदचिन्मिश्रजगद्रूपेणाऽहमेव बहु स्यां तदर्थं प्रजायेयेति स्वयमेव सङ्कल्प्य स्वांशैकदेशादेव वियदादिभूतानि सृष्ट्वा पुनरपि सैव सच्छब्दाभिहिता परा देवतैवमैक्षत 'हन्ताऽहमिमास्तिस्रो[1]

बहुत्वव्यावृत्त्यर्थं जगद्रूपेणेत्युक्तम्, तत्र बहुशब्दार्थोऽस्तीति दर्शयितुं विचित्रानन्तेत्याद्युक्तम्, ( बहु स्यां तदर्थं प्रजायेयेतीति ) जायतेऽस्तीत्याद्यवस्थासु जायमानावस्था जातावस्था चेत्युत्पत्तावेवावस्थाद्वयमस्ति, तत्रास्तिशब्दवाच्योत्पन्नावस्था, उत्पद्यमानावस्था जायत इतिशब्दवाच्या, तत्र 'बहु स्या'मिति पदेनोत्पन्नावस्था विवक्षिता, तत्पूर्वभाविन्युत्पद्यमानावस्था तदर्थं प्रजायेयेत्युक्तेति विभागः। उत्पत्तौ साधनस्य पूर्वभावित्वं साध्यस्य पश्चाद्भावित्वम्, सङ्कल्पे तु साध्यं पूर्वभावि, साधनं पश्चाद्भावि, तस्मात्स्यामिति पूर्वमुक्तम्, ( स्वयमेव ) उपादानभूतं तदेव सङ्कल्प्येत्यर्थः। स्वांशः— प्रकृतिः, तेजोबन्नसृष्टिवचनं वियदादेरपि प्रदर्शनार्थमिति वियदधिकरणसिद्धार्थाभिप्रायेणाह ( वियदादीति )। श्रीभाष्ये महदादेरपि प्रदर्शनार्थमित्युक्तम्, ( पुनरपीति ) व्यष्टिसृष्ट्यर्थमित्यर्थः। ( सैवेति ) 'सदेवे'त्यादौ निर्विशेषम्, 'सेयं देवते'ति सगुणमुच्यते इति भ्रमापनयनार्थमेवमुक्तम्। उत्तरत्र 'तेजः परस्यां देवताया'मिति हि वक्ष्यते, तत्प्रत्यभिज्ञानाय परा देवतेत्युक्तम्। अत्र पूर्वापरेषु च सगुणं ब्रह्मैवोच्यते इत्यर्थः। व्यष्टिसृष्टिसङ्कल्पवाक्यमुपादत्ते ( हन्ताहमिति ) 'अनुप्रविश्य नामरूपे व्याकरवाणी'त्यत्रानुप्रवेशो न केवलं तत्तत्पदार्थमात्रपर्यन्तनामरूपव्याकरणार्थः,

1. छा० ६-३-२ ॥

देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे

अपि तु स्वपर्यन्तनामरूपव्याकरणार्थः, अनुप्रवेशश्रवणेन मातापितृकुलालादिनिर्वर्त्यदेवदत्तघटादिनामरूपव्याकरणतो व्यावृत्तताचगमात् 'बहु स्या'मित्युपक्रम एव स्वपर्यन्तनामरूपभाक्त्वसङ्कल्पात्, 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' इति नामरूपयोर्ब्रह्मपर्यन्तत्वश्रवणात् 'तदनुप्रविश्य सच्च त्यच्चाभव'दिति च श्रवणात्, व्यष्टिसृष्टिसङ्कल्पवाक्ये अनुप्रवेशपूर्वकनामरूपव्याकरणोक्तिरायसृष्टेरप्युपलक्षणार्था, महदहङ्कारादिनामरूपयोर्ब्रह्मपर्यन्तत्वात् 'यस्य बुद्धिः शरीरं यस्याहङ्कारः शरीर'मिति हि श्रूयते। अत एव हि 'प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः। क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ'इति स्मृतम्। एवं व्यष्टिसृष्टिसङ्कल्पवाक्येऽपि नामरूपव्याकरणयोर्ब्रह्मपर्यन्तत्वस्य विवक्षितत्वम्—आद्यसृष्टिसङ्कल्पवाक्यानुरोधात्, 'तद्धेद'मित्यादि श्रुत्यन्तरानुगुण्यात्, 'तदनुप्रविश्य सच्च त्यच्चाभव'दित्यनुप्रवेशपूर्वकब्रह्मपर्यन्तनामरूपव्याकरणोक्तेश्चावगम्यते; 'बहु स्या'मित्युक्तं नानानामरूपभाक्त्वम् मृत्पिण्डस्य घटादिनामरूपभाक्त्ववत्? किम् अद्वारकम्, जीवस्य देवादिनामरूपभाक्त्ववत् किं सद्वारकम्—इति संशये 'अनेन जीवेने'त्यादिश्रुतिः सद्वारकमाह, ब्रह्मणस्समष्टिनामरूपभाक्त्वमद्वारकं, महदादेर्जीवम्प्रति शरीरत्वाभावात्, व्यष्टिनामरूपभाक्त्वमद्वारकं सद्वारकं च, तथा सति न द्विपर्यवसानहेतुता गोशब्दादिवत्, (अनेन जीवेनात्मना) जीवशरीरकेण मया, 'सिंहेन भूत्वा बहवो मयाऽत्ता'इतिवत्, 'तदनुप्रविश्य सच्च त्यच्चाभव'दिति जीवेऽप्यनुप्रवेशेन तन्नामभाक्त्वश्रवणात्, जीवेनात्मनेति तृतीयायाः कोऽर्थः, न तावत्सहयोगलक्षणेयं तृतीया, कारकविभक्तौ सम्भवन्त्यामुपपदविभक्तेरन्याय्यत्वादिति न्यायेनोपपदविभक्तेरनुपपत्तेः। न च करणे तृतीया, अनुप्रवेशं

व्याकरवाणी"ति, अनेन जीवेनात्मनेति जीवस्य

प्रति जीवस्य करणत्वाभावात्, अनुप्रवेशस्य द्वारकर्त्ता हि सः, जीवशब्दस्य परमात्मपर्यन्तत्वाच्च नेयं करणे तृतीया, तस्मात्कर्त्तरि तृतीया। ननु तिङ्कृत्तद्धितसमासैरनभिहितं कारकं हि विभक्त्यभिधेयम्। अत्र तु व्याकरवाणीति तिङभिहितत्वान्न तृतीयाभिधेयः कर्त्ता, तत्र प्रथमैव युक्तेति चेत्—न, व्याकरणकर्ता हि तिङभिहितः, अनुप्रवेशकर्त्ता तु नाभिहित इति स तृतीयाभिधेयः, नामरूपव्याकरणानुप्रवेशक्रिययोः समानकर्तृकत्वमनुप्रविश्येति क्त्वाप्रत्ययेनाभिहितमिति न तृतीयाभिधेयः कर्त्तेति चेन्न, कर्ता हि न क्त्वाभिधेयः, अपि तु प्रत्ययान्तराभिधेयः, प्रत्ययान्तरप्रतिपन्नयोः कर्त्रोरैक्यमेव क्त्वाप्रत्ययाभिधेयम्, यथा समानाधिकरणवाक्येषु प्रातिपदिकावगते विशिष्टार्थे विशेष्यांशैक्यमात्रं समानविभक्त्यभिधेयम्, न तु विशेषणान्वयो विशेष्यं वा, एवमत्रापि क्त्वाप्रत्ययो न कर्त्रभिधायी, अपि तु शब्दान्तरप्रतिपन्नक्रियाद्वयकर्त्रैक्यमात्राभिधायी। क्त्वाप्रत्यय एव कर्त्रभिधायी चेत्, व्याकरवाणीत्यत्र तिङ्प्रत्ययो निरर्थकः स्यात्, तस्माच्छब्दान्तरप्रतिपन्नक्रियाद्वयकर्त्रैक्यमात्राभिधायी क्त्वाप्रत्यय इत्यनुप्रवेशक्रियाकर्त्ता तृतीयाभिधेय एव। 'कर्त्तरि कृ'दिति कृत्प्रत्ययानां कर्त्र्यभिहितत्वात् कृत्सञ्ज्ञकः क्त्वाप्रत्ययः कर्त्रभिधायीति चेन्न, अर्थान्तरेष्वविहितानामेव कृत्प्रत्ययानां कर्त्रर्थत्वं, न त्वर्थान्तरे विहितानाम्, तव्यदादीनां हि कर्माद्यर्थे विहितत्वात्। अयं तु क्त्वाप्रत्ययो भावे विहितः, तथाऽधिकारात्, अत्र प्रातिपदिकार्थमात्रे यथा प्रथमा विभक्तिः, तथा धात्वर्थमात्रे विहितो यः प्रत्ययः स भावार्थः, अयं तु क्त्वाप्रत्ययो भावे विहित इति न कर्त्रभिधायी,। तस्मात् तृतीयया कर्त्ताऽभिधीयत इति निरवद्यम्, अनेनेत्यादिवाक्यं संक्षेपेण योजयति ( अनेनेत्यादिना ) पदार्थत्वं तत्तच्छब्दवाच्यत्वं देवमनुष्याद्याकारविशिष्टत्वम्, न हि निराकारः पदार्थः, पृथिवी स्वाकारविशिष्टो

ब्रह्मात्मकत्वं प्रतिपाद्य ब्रह्मात्मकजीवानुप्रवेशादेव कृत्स्नस्याचिद्वस्तुनः पदार्थत्वम्; एवंभूतस्यैव सर्वस्य वस्तुनो नामरूपभाक्त्वमिति च दर्शयति ।

एतदुक्तं भवति– जीवात्मा तु ब्रह्मणः शरीरतया प्रकारत्वात् ब्रह्मात्मकः "यस्यात्मा शरीर"मिति श्रुत्यन्तरात्, एवंभूतस्य जीवस्य शरीरतया प्रकारभूतानि देवमनुष्यादिसंस्थानानि वस्तूनीति ब्रह्मात्मकानि तानि सर्वाणि, अतो देवो मनुष्यो यक्षो राक्षसः पशुर्मृगः पक्षी

---

हि पृथिवीपदार्थः, परमात्मपर्यन्तस्यैव वस्तुनस्तत्तदवस्थाविशिष्टत्वं न स्वतन्त्रस्येत्यर्थः । तत्पर्यन्तस्यैव देवादिनामभाक्त्वं चेत्याह ( एवंभूतस्यैवेति ) ।

मृदात्मको घट इतिवत् ब्रह्मात्मकत्वं स्वरूपैक्येऽप्युपपद्यते, शरीरशरीरिभावेन तादात्म्यमस्तु, तथा सति किं प्रयोजनम्, सर्वशब्दानां परमात्मपर्यन्तत्वं चेत्, परमात्मनि देवत्वमनुष्यत्वादेः प्रकृत्यर्थस्य द्वित्वादेर्विभक्त्यर्थस्य चायोगान्न तत्पर्यन्तत्वमुपपद्यते–इति शङ्कायां विस्तरेण वाक्यार्थमाह ( एतदुक्तं भवतीत्यादिना ) शरीरत्वमस्तु, ततः किं ब्रह्मपर्यन्ताभिधानस्येत्यत्राह ( प्रकारत्वादिति ) प्रकारत्वं दण्डकुलादेरप्यस्तीति तद्व्यावृत्त्यर्थं शरीरतया प्रकारत्वादित्युक्तम्, एवं ब्रह्मात्मकत्वं शरीरशरीरिभावादित्युक्तम् । आत्मशब्दः स्वरूपैक्ये शरीरशरीरिभावे च साधारणः । अत्र शरीरशरीरिभाव एवेति किं नियामकमिति चेत्तत्राह ( यस्यात्मेति ) जीवात्मा ब्रह्मणः शरीरमस्तु, ततः किमित्यत्राह ( अत इति )

वृक्षो लता काष्ठं शिला तृणं घटः पट इत्यादयः सर्वे प्रकृतिप्रत्यययोगेनाभिधायकतया प्रसिद्धाः शब्दाः लोके तत्तद्वाच्यतया प्रतीयमानतत्तत्संस्थानवस्तुमुखेन तदभिमानिजीवतदन्तर्यामिप-

---

देवाद्यवान्तरजातीयानामपि ब्रह्मपर्यन्तत्वं दर्शयितुं यक्षराक्षसादय उपात्ताः, 'अप्राणिमत्सु स्वल्पा सा' 'ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि' 'भूतानां प्राणिनः श्रेष्ठाः' इत्यादिभिर्लोष्टकाष्ठादेर्जीवाधिष्ठितत्वश्रवणात् काष्ठं शिलेत्याद्युक्तम्, छिन्नद्रुमो हि काष्ठम्, तत्र द्रुमावस्थाधिष्ठातृजीवापगमेऽपि काष्ठावस्थाभिमानी जीवो विद्यत एव, नामरूपभाक्त्वादिति भावः । (तत्तत्संस्थानवस्तुमुखेनेति) अनेन परमात्मनि देवत्वमनुष्यत्वद्वित्वाद्यनुपपत्तिः परिहृता भवति । देवत्वद्वित्वादीनां परमात्मस्वरूपे अव्यवधानेनान्वयाभावेऽपि देवत्वादीनां प्रकृत्यभिधेयानां प्रत्ययाभिधेयानां द्वित्वादीनां च परमात्मनि सद्वारकान्वयः संभवतीत्यर्थः । अत एव 'काठिन्यवान् यो बिभर्ति' इत्यादिरुपपद्यत इति—एतदुक्तं भवतीत्यन्वयः ।

अथ त्रिवृत्करणादिवाक्यानां, प्रस्तुतार्थानपेक्षितत्वेन तानि विहायापेक्षितवाक्यानामर्थं संग्रहेणाह (एवमित्यादिना) नामरूपव्याकरणार्थं हि त्रिवृत्करणम्, तस्मात् त्रिवृत्करणसाध्यं नामरूपव्याकरणं सङ्कल्पवाक्ये पूर्वभाव्यभूत्, उत्पत्तिवाक्ये तु त्रिवृत्करणस्य पूर्वभावित्वं युक्तम्, पाठक्रमेण त्रिवृत्करणस्य पश्चाद्भावित्वेऽप्यर्थक्रमेण पाठक्रमस्य बाधितत्वात् त्रिवृत्करणं पूर्वभावि, यथा 'अग्निहोत्रं जुहोति यवागूं पचती'त्यत्र यवाग्वाः पूर्वभावित्वं पाठक्रमबाधेनाङ्गीक्रियते, 'यवाग्वा जुहोती'ति यवाग्वा होमसाधनतया विहितत्वात्, तद्वदत्रापि क्रमोऽनुसन्धेयः ।

रमात्मपर्यन्तस्य संघातस्यैव वाचका इति ।

एवं समस्तस्य चिदचिदात्मकप्रपञ्चस्य सदुपादनता–सन्निमित्तता–सदाधारता–सन्नियाम्यता-सच्छेषतादि–सर्वं च [1]"सन्मूलाः सोम्येमाः सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा" इत्यादिना विस्तरेण प्रतिपाद्य कार्यकारणभावादिमुखेन [2]"ऐतदात्म्यमिदं सर्वं तत्सत्य"मिति कृत्स्नस्य जगतः स एवात्मा कृत्स्नं जगत्तस्य शरीरम्, तस्मात्त्वंशब्दवाच्यमपि

'सन्मूलाः सोम्येमा' इत्यादिवाक्यस्यार्थमाह (एवमिति) सदुपादनतासन्निमित्तताशब्देन सन्मूला इत्यत्र मूलशब्दार्थ उक्तः । सदायतनशब्दार्थमाह (सदाधारतेति) नियन्तृतया धारकत्वात्, धारकत्वाकृष्टमर्थमाह (सन्नियाम्यतेति) अनेन शेषत्वमप्यर्थसिद्धम्, †शरीरतया हि शरीरत्वं शेषत्वं धार्यत्वं, नियाम्यत्वं च तदप्याह (सच्छेषतादीति) आदिशब्देनानुक्तमविरुद्धमन्यतो ग्राह्यमिति न्यायादन्यदपेक्षितं गृह्यते, कार्यकारणभावादिमुखेनेत्यादिशब्देन सदाधारत्वादिकं विवक्षितम्, तेन ब्रह्मात्मकत्वमेव सत्यमिति प्रतिपाद्यते, आरंकर्वादिभिस्तावच्छरीरात्मभावः सिद्धः, कार्यकारणभावाच्च सिद्ध्यति, स्वरूपमात्रस्य कारणत्वायोगेन विशिष्टस्यैव कारणत्वात् । ब्रह्मात्मकत्वमेवेत्येवकारेण स्वपर्यन्तत्वं प्रामाणिकमित्युक्तं भवति, ऐतदात्म्यमिति– एतदात्मकम्, स्वार्थे ष्यञ्, सम्बन्धार्थे वा, एतदात्मसम्बन्धीत्यर्थः, अस्यात्मनः शरीरतया सम्बन्धीत्युक्तं भवति, 'ऐतदात्म्यमिदं सर्वम्', 'स आत्मे'ति निर्देशः 'रामानुजं लक्ष्मणपूर्वजं चे'तिवन्मन्तव्यः । आत्मशब्देन फलितमर्थमाह (कृत्स्नं जगत्तस्य शरीर-

[1]. छा० ६–८–४ ॥ [2]. छा० ६–८–६ ॥ †चिन्त्यमिदम् ॥

जीवप्रकारं ब्रह्मैवेति सर्वस्य ब्रह्मात्मकत्वं प्रतिज्ञातं "तत्त्वमसी"ति जीवविशेषे उपसंहृतम्।

एतदुक्तं भवति– "ऐतदात्म्यमिदं सर्व"मिति चेतनाचेतनप्रपञ्चमिदं सर्वमिति निर्दिश्य तस्य

---

मिति) अस्यायं पितेत्युक्ते पितृत्वप्रतियोगिनः पुत्रत्वं ह्यर्थसिद्धं भवति, (तस्मादित्यादि) 'ऐतदात्म्य'मिति सामान्येन वैयधिकरण्येन प्रतिज्ञातं ब्रह्मात्मकत्वं 'तत्त्वमसी'ति सामानाधिकरण्येन जीवविशेष उपसंहृतमित्यर्थः। अनेनोद्देश्योपादेयविभागनिमित्तं चोद्यं परिहृतं भवति। उद्देश्योपादेयविभागे सति त्वंशब्द उद्देश्यसमर्पको भवति, तच्छब्दावगतकारणत्वस्य प्रमाणान्तरासिद्धत्वात्, त्वंशब्दस्तु लोकप्रसिद्धप्रकारेणोद्देश्यसमर्पकः, जीवस्य ब्रह्मात्मकत्वं च नः प्रत्यक्षादिप्रमाणप्रसिद्धं तस्माज्जीवमात्रपरस्त्वं शब्दः, त्वंशब्दावगतजीवस्य तच्छब्दावगतस्य ब्रह्मणश्च सामानाधिकरण्येन प्रतिपाद्यमानमैक्यं स्वरूपैक्यमेव भवतीति चोद्यम्। परिहारस्तु– 'ऐतदात्म्य'मिति सर्वस्य ब्रह्मात्मकत्वस्य प्राप्तत्वात् यथाप्राप्तमुपसंहार्यत्वात्सामान्येनोक्तस्य उपसंहारस्यापेक्षितत्वाच्च जीवविशेषे पूर्वोक्तब्रह्मात्मकत्वं सामानाधिकरण्येनोपसंहृतमिति।

'ऐतदात्म्य'मित्यत्राप्यात्मशब्दो मृदात्मको घट इतिवत् स्वरूपैक्यपरः स्यात्, तेन तत्त्वमसीत्युपसंहारेऽपि स्वरूपैक्यमेवोक्तं भवति, 'ऐतदात्म्यमिदं सर्व'मित्यत्राचिद्ब्रह्मणोरैक्यं 'तत्त्वमसी'ति जीवब्रह्मणोरैक्यं चोक्तमिति नात्रानुवाद इति शङ्काद्वयमभिप्रेत्याह (एतदुक्तं भवतीति) चेतनाचेतनप्रपञ्चमित्यनेन अचिद्ब्रह्मणोरैक्यं प्रतिपादितमित्येतत्प्रत्युक्तम् सर्वशब्दो हि असङ्कोचेन प्रमाणान्तरगम्यं सर्वं चेतनाचेतनात्मकं जगद्वदतीत्यचिन्मात्रपरत्वे सर्वशब्दस्वारस्यभङ्गात्। श्रुत्य-

प्रपञ्चस्यैष आत्मेति प्रतिपादितः, प्रपञ्चोद्देशेन ब्रह्मात्मकत्वं प्रतिपादितमित्यर्थः। तदिदं ब्रह्मात्मकत्वं किमात्मशरीरभावेन? उत स्वरूपेणेति विवेचनीयम्, स्वरूपेणेति चेत् ब्रह्मणः सत्यसङ्कल्पत्वादयः "तदैक्षत बहु स्यां प्रजायेये"त्युपक्रमावगता बाधिता भवन्ति। शरीरात्मभावेन च तदात्मकत्वं श्रुत्यन्तराद्विशेषतोऽवगतम् "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मे"ति, प्रशासितृस्वरूपात्मत्वेन सर्वेषां जनानामन्तः प्रविष्टः, अतः सर्वात्मा, सर्वेषां जनानामात्मा, सर्वं चास्य शरी-

---

न्तरे च 'इदं सर्वमसृजते'त्यारभ्य 'सच्च त्यच्चाभवत् विज्ञानं चाविज्ञानं चेती'दं सर्वमिति निर्दिष्टस्य जगतश्चेतनाचेतनात्मकत्वेन विवृतत्वाच्च, ऐतदात्म्यमित्यत्र किमुद्देश्यं किमुपादेयमित्यत्राह (प्रपञ्चोद्देशेनेति) एवमेकाशङ्का परिहृता। अथात्मशब्दस्य स्वरूपैक्यपरत्वं व्युदस्यति (तदिदमित्यादिना) (स्वरूपेणेति चेदिति) अचिद्ब्रह्मणोः स्वरूपैक्ये अचेतनत्वादेव सत्यसङ्कल्पत्वादिविरोधः। जीवब्रह्मणोरैक्ये तस्य कर्मवश्यत्वादेव सत्यसङ्कल्पत्वादिविरोध इत्यर्थः। एतद्विरोधपरिहाराय शरीरात्मभावः कल्प्यत इत्यभिप्रायः, न केवलमनया श्रुत्यर्थापत्त्या कल्प्यः, अपि तु ब्रह्मण आत्मत्वं जगतस्तच्छरीरत्वं च कण्ठोक्तमित्याह (शरीरात्मभावेन चेति) का पुनः श्रुतिः? तत्र विशेषतोऽवगतिः कथम्? इति शङ्कायां श्रुतिवाक्यमाह (अन्तरिति) तत्र वाक्ये विशेषतोऽवगतिं दर्शयति (प्रशासितृत्वेति) (सर्वात्मेति) उक्तमात्मत्वं प्रशासितृत्वलक्षणमिति दर्शयितुं प्रशासितृत्वरू

रमिति विशेषतो ज्ञायते ब्रह्मात्मकत्वम् । "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति च, अत्राप्यनेन जीवेनात्मनेति इदमेव ज्ञायत इति पूर्वमेवोक्तम् । अतः सर्वस्य चिदचिद्वस्तुनो ब्रह्मशरीरत्वात्सर्वशरीरं सर्वप्रकारं सर्वशब्दैर्ब्रह्मैवाभिधीयत इति 'तत्त्व'मिति सामानाधिकरण्येन जीवशरीर-

---

पात्मत्वेनेत्युक्तम् । अन्तः प्रविष्टशब्देन राजादिव्यावृत्तिः, शास्तेतिपदेन गगनादिव्यावृत्तिः । अतः—अन्तः प्रविश्य प्रशासितृत्वादित्यर्थः । कथं विशेपतोऽवगतमित्यपेक्षायामेवं विशेपतो ज्ञायत इत्युक्तमिति न पुनरुक्तिः । अस्मिन्वाक्ये प्रशासितृत्वविशेपितात्मस्वरूपत्वस्य कण्ठोक्तिः । शरीरत्वं गम्यम् ॥ अथात्मत्वशरीरत्वकण्ठोक्त्यन्वितं वाक्यमाह ( य आत्मनीति ) यद्यपि शरीरशरीरिभावः श्रुत्यन्तरसिद्धः स्यात्, तथाऽप्येतत्प्रकरणे स्वरूपैक्यं गम्यत इत्यत्राह (अत्रापीति) ततः किं सामानाधिकरण्यसिद्धेरित्यत्राह ( अत इति ) सामानाधिकरण्येनोपसंहारे किं प्रयोजनमित्यत्राह ( एवमभिहिते सतीति) बुद्धिशब्दयोस्तत्पर्यन्तताज्ञापनं प्रयोजनमित्यर्थः, परमात्मशरीरतया परमात्मप्रकारभूतः परमात्मपर्यन्त—: इति शरीरतया प्रकारत्वेन पृथक्सिद्धिस्थितिप्रवृत्त्यनर्हं इत्यर्थः । बुद्धिशब्दयोस्तत्पर्यन्तत्वे हेतुमाह ( अनेनेति ) स्वनामभाक्त्वादन्तर्यामिणमेवाचष्ट इति अयमर्थ इत्यन्वयः । परं प्रति वक्ष्यमाणदूपणानां स्वपक्षास्पर्शित्वं दर्शयितुं स्वपक्षे सामानाधिकरण्यसाद्गुण्यं विवक्षुस्तत्रैकार्थवृत्तित्वसिद्धिमाह ( तत्त्वमिति ) ( समानाधिकरणवृत्तयोरिति ) तत्रेत्यादिना वाक्य-

तया जीवप्रकारं ब्रह्मैवाभिहितम्, एवमभिहिते सत्ययमर्थो ज्ञायते, त्वमिति यः पूर्वं देहाधिष्ठातृतया प्रतीतः स परमात्मशरीरतया परमात्मप्रकारभूतः परमात्मपर्यन्तः पृथक्स्थितिप्रवृत्त्यनर्हः, अतस्त्वमितिशब्दस्तत्प्रकारविशिष्टं त्वदन्तर्यामिणमेवाचष्ट इति, "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति ब्रह्मात्मकतयैव जीवस्य ब्रह्म शरीरिणः स्वनामभाक्त्वात्, तत्त्वमिति समानाधिकरणवृत्तयोर्द्वयोरपि पदयोर्ब्रह्मैव वाच्यम् । तत्र तत्पदं जगत्कारणभूतं सकलकल्याणगुणगणाकरं निरवद्यं निर्विकारमाचष्टे । त्वमिति च तदेव ब्रह्म जीवान्तर्यामिरूपं सशरीरं जीवप्रकारविशिष्टमाचष्टे । तदेवं प्रवृत्तिनिमित्तभेदेनैकस्मिन् ब्रह्मण्येव तत्त्वमिति द्वयोः पदयोर्वृत्तिरुक्ता, ब्रह्मणो निरवद्यत्वं निर्विकारत्वं सर्वकल्याण-

---

द्वयेन तत्त्वमिति पदद्वयस्य प्रवृत्तिनिमित्तभेदसिद्धिमाह । तत्त्वंशब्दौ त्वदुक्तार्थपरौ स्याताम्, ततः किमित्यत्राह ( तदेवमिति ) प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वरूपं सामानाधिकरण्यं सिद्धमित्यर्थः । त्वन्मते सामानाधिकरण्यलक्षणासिद्धिः, वाक्यान्तरावगतसर्वज्ञतादिगुणविरुद्धमविद्याश्रयत्वादि कल्पनीयं चेत्यभिप्रायेणाह ( ब्रह्मण इति ) सर्वे पदार्थाः शब्दाश्च ब्रह्मपर्यन्ताश्चेत् ब्रह्मपर्यन्ततया पदार्थाः प्रतीयेरन् शब्दाश्च तत्पर्यन्ततया व्युत्पद्येरन्, न च तथा क्रियते, तस्मात्

गुणाकरत्वं जगत्कारणत्वं चाबाधितम् । अश्रुतवेदान्ताः पुरुषाः 'सर्वे पदार्थाः सर्वे जीवात्मानश्च ब्रह्मात्मका' इति न पश्यन्ति, सर्वशब्दानां च केवलेषु तत्तत्पदार्थेषु वाच्यैकदेशेषु वाच्यपर्यवसानं मन्यन्ते, इदानीं वेदान्तवाक्यश्रवणेन ब्रह्मकार्यतया तदन्तर्यामिकतया सर्वस्य ब्रह्मात्मकत्वं सर्वशब्दानां तत्तत्प्रकारसंस्थितब्रह्मवाचित्वं च जानन्ति । नन्वेवं गवादिशब्दानां तत्तत्पदार्थवाचि-

---

नामरूपयोर्ब्रह्मपर्यन्तत्वमयुक्तमित्यत्राह ( अश्रुतेति ) पदार्थानां ब्रह्मपर्यन्ततया ग्रहणाभावो वेदान्तश्रवणरूपसामग्रीवैकल्यात्, [1]न स्वतथाभावादित्यर्थः । ( सर्वशब्दानां चेति ) तस्मादेव सामग्रीवैकल्यात् तत्तच्छब्दानां तत्तत्पर्यन्तत्वव्युत्पत्त्यभाव इत्यर्थः । न हि चक्षुषा गन्धग्रहणाभावे सति गन्धाभाव इत्यर्थः, सामग्र्यां सत्यां तत्पर्यन्तत्वग्रहणात् पूर्वं तत्तत्पदार्थमात्रपर्यन्तत्वग्रहणं सामग्रीवैकल्यात्, घ्राणेन गन्धग्रहणे सति चक्षुषा गन्धग्रहणाभावस्सामग्र्यभावात्, न तु गन्धाभावादित्यवगम्यते हीत्याह ( इदानीमिति ) इदानीं— वेदान्तश्रवणरूपसामग्रीसम्भवे सति, वेदान्तवाक्यानि तत्तत्पदार्थतज्जच्छब्दानां सापेक्षतया ब्रह्मपर्यन्तत्वं बोधयितुं न शक्नुवन्ति इति चोदयति (नन्विति) वेदान्तवाक्यानि किं व्युत्पत्तिनिरपेक्षाणि ? उत तत्सापेक्षाणि ? व्युत्पत्तिनिरपेक्षाणीति चेत्—अव्युत्पन्नस्यापि बोधजनकानि स्युः, सापेक्षाणीति चेत्— अन्यपर्यन्ततया व्युत्पन्नस्य शब्दस्यान्यपर्यन्तत्वं व्युपत्तिविरुद्धं न बोधयन्ति, व्युत्पत्तेश्च प्रत्यक्षसापेक्षत्वात्,

---

१. नतदर्थाभावात् पा० ।

तया व्युत्पत्तिर्बाधिता स्यात्, नैवम्, सर्वे शब्दा अचिज्जीवविशिष्टस्य परमात्मनो वाचका इत्युक्तं 'नामरूपे व्याकरवाणी'त्यत्र । तत्र लौकिकास्तु पुरुषाः शब्दं व्याहरन्तो शब्दवाच्ये प्रधानां

---

तद्विरुद्धं सकलपदार्थानामन्यपर्यन्तत्वं च न बोधयन्ति, यथा 'आदित्यो यूपः' इत्यादिवाक्यम्, तत्र व्युत्पत्त्यर्थं शब्दस्य प्रत्यक्ष सापेक्षत्वात्, प्रत्यक्षविरुद्धं यूपादित्यतादात्म्यं हि न बोधयितुम तद्वाक्यम्, अत्रापि तद्वदित्यर्थः । परिहरति ( नैवमित्यादिना यूपादित्यभेदविपयस्य प्रत्यक्षस्यानन्यथासिद्धत्वात् तद्यूपादित्यतादात्म्य वादिवाक्यस्वारस्यभञ्जकं, न तु प्रत्यक्षत्वात् । अत एव हि प्रत्यक्ष वगतज्वालैक्यस्यानन्यथासिद्धमनुमानं भञ्जकम्, देहातिरिक्ता वादिवाक्यं प्रत्यक्षसिद्धदेहात्माभिमानस्य भञ्जकम्, तत्र ज्वालैक्यप्रत्यक्षमेकवर्तिकावर्तित्वसादृश्यादन्यथासिद्धम्, देहात्माभि मानविषयं प्रत्यक्षं चोष्णं जलमितिवत् संसर्गादन्यथासिद्धः तस्माज्ज्वालैक्यविषयस्य देहात्माभिमानविषयस्य चान्यथासिद्धस्य प्रत्यक्षस्यानुमानागमौ भञ्जकौ भवतः । तत्राऽपि व्याप्तिलिङ्गधर्मिग्राहि प्रत्यक्षस्यानन्यथासिद्धत्वात्तदबाधितम् । एवमत्रापि तत्तत्पदार्थपर्य न्तत्वग्रहणमन्यथासिद्धम्, तत्तत्पर्यन्तत्वव्युत्पत्तिश्चान्यथासिद्धेति अन न्यथासिद्धागमेनान्यथासिद्धांशबाधो युक्त एव । अत्राप्यनन्यथासि तत्तत्पदार्थस्वरूपविषयं शब्दस्वरूपविषयं तत्सम्बन्धविषयं च प्रत्य न बाध्यते, अन्यथासिद्धस्तावन्मात्रपर्यन्तत्वांश एव बाध्यत इ परिहारमभिप्रेत्याह ( सर्वे इत्यादिना ) शब्दानां परमात्मपर्यन्त युक्तम्, बाधकस्यान्यथासिद्धत्वादित्यभिप्रायः । तत्र कथमन्यथासिद्धि रित्यत्राह ( तत्र लौकिका इति ) तत्तत्पदार्थानां ब्रह्मपर्यन्तत्वग्रह तत्तत्पर्यन्तशब्दव्युत्पत्तौ च ब्रह्मस्वरूपग्रहणमवश्यापेक्षितम्, यथा नैत

शस्य परमात्मनः प्रत्यक्षाद्यपरिच्छेद्यत्वाद्वाच्यैकदेशभूते वाच्यसमाप्तिं मन्यन्ते। वेदान्तश्रवणेन च व्युत्पत्तिः पूर्यते। एवमेव वैदिकास्सर्वे शब्दाः परमात्मपर्यन्तान् स्वार्थान् बोधयन्ति, वैदिका एव सर्वे शब्दा वेदादेवोद्धृत्योद्धृत्य परेणैव ब्रह्मणा सर्वपदार्थान्पूर्ववत्सृष्ट्वा तेषु परमात्मपर्यन्तेषु पूर्ववन्नामतया प्रयुक्ताः। तदाह मनुः [1]"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्। वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्म-

---

पीतिमादीनां द्रव्यपर्यन्तत्वग्रहणे नीलपीतादिशब्दव्युत्पत्तौ च तत्तद्वस्तुग्रहणमपेक्षितम्, तस्य च प्रत्यक्षाद्यगोचरत्वात्तत्तद्वस्तुमात्रपर्यन्तत्वग्रहणं तत्तत्पर्यन्तव्युत्पत्तिश्चोभयमन्यथासिद्धमित्यर्थः। तर्हि व्युत्पत्त्या वेदान्तश्रवणं वेदान्तश्रवणेन च व्युत्पत्तिरित्यत्राह (वेदान्तेति) एकदेशव्युत्पत्त्या वेदान्तश्रवणमुपपद्यते, वेदान्तश्रवणेन व्युत्पत्तिपूर्तिः, न तु कात्स्न्र्येनादितःप्रभृति व्युत्पत्तिरिति नान्योन्याश्रय इत्यर्थः। एवं लौकिकशब्दानां तत्तद्वस्तुमात्रपर्यन्तत्वेन व्युत्पन्नानामपि परमात्मपर्यन्तत्वमुक्तम्, वैदिकशब्दानां परमात्मपर्यन्तत्वमाह (एवमेवेति) वैदिका एव शब्दाः परमात्मपर्यन्ताः स्युः, लौकिकास्तत्तद्वस्तुमात्रपर्यन्ताः स्युः व्युत्पत्तिस्वारस्यसिद्ध्यर्थमित्यत्राह (वैदिका एवेति) लौकिकानां शब्दानामपि वेदशब्देभ्य उद्धृत्य तत्तद्वस्तुषु प्रयुक्तत्वात्सर्वे शब्दा वैदिका एवेति सर्वे परमात्मपर्यन्ता एवेत्यर्थः। तत्र प्रमाणमाह (तदाहेति)

---

1. मनु० अ० १-२० ॥

मे" इति, संस्थाः—संस्थानानि रूपाणीति यावत् । आह च भगवान् पराशरः [1]"नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार सः" ॥ इति । श्रुतिश्च [2]"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पय"दिति सूर्यादीन् पूर्ववत्परिकल्प्य नामानि च पूर्ववच्चकारेत्यर्थः । एवं जगद्ब्रह्मणोरनन्यत्वं प्रपञ्चितम्, तेनैकेन ज्ञातेन सर्वस्य ज्ञाततोपपादिता भवति सर्वस्य ब्रह्मकार्यत्वप्रतिपादनेन तदात्मतयैव सत्यत्वं, नान्यथेति "तत्सत्य"मित्युक्तम् । यथा दृष्टान्ते सर्वस्य मृद्विकारस्य मृदात्म-

संस्थाशब्दस्य स्थित्यर्थताव्यावृत्त्यर्थमाह (संस्थाः संस्थानानीति) (आह चेति) अत्र मनुपराशरयोरैककण्ठ्यं दर्शितम्, (श्रुतिश्चेति) 'सूर्याचन्द्रमसा'विति निर्देशेन नामकल्पनं चार्थसिद्धमित्यभिप्रायस्य वोक्तोपबृंहणवचनानुगुण्याच्च नामानि च पूर्ववच्चकारेति व्याख्यातम् शब्दाः सर्वे वैदिका एव, आनुपूर्वीभेदमात्रात् लौकिकत्वम्, तत एव लक्षणभेदश्च। तस्मात्सर्वशब्दा ब्रह्मपर्यन्ता इति । ततः किं "अमयमर्थः" इत्यारभ्य प्रतिपिपादयिषितस्यार्थस्य इत्यत्राह (एवमिति) ब्रह्मण एवोपादानत्वनिमित्तत्वोपपादनेन जगद्ब्रह्मणोरनन्यत्वमुक्तमित्यर्थः । (तेनेति) जगतः सत्यत्वेन, सत्यमिथ्यार्थयोरेकताप्रसङ्गाद्यभावादेकविज्ञानेन सर्वविज्ञानमुपपादितं भवतीत्यर्थः । (सर्वस्येत्यादि) 'तत्सत्यमिति' वाक्ये ब्रह्मात्मकतयैव जगत् सत्यं, स्वनिष्ठत्वमेवासत्यमिति जगतो

1. वि० १-५-६३ ॥ 2. तै० १-- अनु० ॥

ब्रह्मात्मकत्वेन सत्यत्वोपपादनान्महावाक्यस्वारस्यमपि जगत्सत्यत्वानुगुणमित्यर्थः। (यथेति) लोकदृष्टप्रकारेण दृष्टान्तस्य कथनीयत्वात्, दृष्टान्तस्य च लोके सत्यत्वेन सम्प्रतिपन्नत्वाद्दार्ष्टान्तिकस्य च दृष्टान्तानुगुणत्वात्तत्सत्यमित्यादिवाक्यान्यपि जगत्सत्यत्वपराणीति महावाक्यस्वारस्यं जगत्सत्यत्वानुगुणमित्याशयः। किञ्च—मृत्पिण्डादिदृष्टान्तत्रयमपि परिणामपक्षानुगुणमेव, दार्ष्टान्तिकब्रह्मकारणत्वपराणि 'तत्तेजोऽसृजत' 'तदात्मानं स्वयमकुरुते'त्यादिवाक्यान्यपि परिणामानुगुणान्येव। न हि रज्जुसर्पादिदृष्टान्तः श्रूयते, व्यवर्तत अभ्रमदित्यादिकमपि पदं न श्रूयते। सूत्रं च 'परिणामात्' 'आत्मकृतेः' 'पटवच्चे'त्यादि, न विवर्तनादिति रज्जुसर्पवदिति च, उपबृंहणवचनान्यपि परिणामानुगुणान्येव, "निस्सरन्ति यथा लोहपिण्डात्" "कटकमुकुटे"त्यादीनि, एवं सकलश्रुतिस्मृतिसूत्रानुगुण्यात्परिणामपक्षे सुस्थे सति स च सद्वारकोऽद्वारको वा परिणाम इति विवेके ब्रह्मणो निर्दोषत्वाविकारत्वादिश्रुतिबाधप्रसङ्गात्सद्वारकत्वमेव युक्तम्, 'यस्यात्मा शरीर'मित्यादिश्रुतयश्च शरीरशरीरिभावं वदन्त्यः परिणामादिकं सद्वारकं ज्ञापयन्ति। उपबृंहणेष्वपि 'काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नमः' इति ब्रह्मणो निर्देशात्सद्वारकत्वमेव स्पष्टम्, सद्वारकमुपादानत्वं ब्रह्मणो मुख्यमेव; शरीरवाचिपदानां शरीरिपर्यन्तत्वात्। मीमांसकैरपि सद्वारकस्यापि मुख्यत्वमभ्युपगम्यते, यथा परमापूर्वं प्रति प्रोक्षणादेः शेषत्वम्, तत्र हि यज्ञशेषत्वं व्रीह्यादिद्वारकम्, अपूर्वशेषत्वं व्रीहियागद्वारकम्। 'अरुणया क्रीणाति' 'गवा यजेते'त्यादिषु गुणस्य जातेश्च क्रययजनसाधनत्वं सद्वारकमपि मुख्यमेवाभ्युपगतम्। एवं विशिष्टस्य ब्रह्मणः शरीरद्वारकमुपादानत्वं मुख्यमेव। एवं विशिष्टस्यैवोपादानत्वं सर्ववेदान्तिभिरभ्युपगतम्। अविद्योपाधिशक्तिविशिष्टस्यैवोपादानत्वोपपादनात्, तस्मात् चिदचिद्विशिष्टमेव ब्रह्म कारणं परिणामित्वेन, नतु विवर्ताधिष्ठानत्वेन, सद्विद्यायां

नैव सत्यत्वम् ।

शोधकवाक्यान्यपि निरवद्यं सर्वकल्याणगुणाकरं परं ब्रह्म शोधयन्ति । सर्वप्रत्य-

---

षड्विधतात्पर्यलिङ्गं चास्मत्पक्ष एवास्ति । षड्विधतात्पर्यलिङ्गमद्वैतविषयमित्येतदभ्युपेतम्, तत्तु न निर्विशेषाद्वैतविषयम्, अपि तु विशिष्टाद्वैतविषयम्, उपक्रमे 'सदेवे'ति वाक्यं च निमित्तत्वोपादानत्वतदुपयोगिसार्वज्ञ्यसर्वशक्तित्वादिपरत्वात्सविशेषविषयम् । उपसंहारगतं 'तत्त्वमसी'ति सामानाधिकरण्यं प्रवृत्तिनिमित्तभेदेनैकार्थविषयत्वात् विशिष्टाद्वैतविषयम्, विशिष्टैकार्थपरस्य 'तत्त्वमसी'ति वाक्यस्यावृत्तत्वादभ्यासोऽस्ति, चिदचिदात्मकप्रपञ्चस्य ब्रह्मविशेषणत्वं प्रमाणान्तरागोचरमित्यपूर्वता चास्ति । एतदर्थज्ञानवतः 'तस्य तावदेव चिर'मिति मोक्षोपदेशात्फलं चास्ति । एतद्विषयस्य पितापुत्रसंवादरूपत्वादर्थवादश्च, तस्मिन्नेवार्थे मृत्कार्यदृष्टान्तोपन्यासादुपपत्तिश्चास्तीति षड्विधतात्पर्यलिङ्गं विशिष्टाद्वैतविषयमित्याशयः ।

एवं सद्विद्यायास्सविशेषपरत्वमुक्तम् । अथ शोधकवाक्यानां सविशेषपरत्वमुच्यते (शोधकेत्यादिना) तत्र श्रौतगुणनिषेधं द्विधा परिहरति (निरवद्यं सर्वकल्याणगुणाकरमिति पदद्वयेन) सामान्यनिषेधो विशेषोपस्थापके सति तत्र पर्यवस्यति 'छागो वा मन्त्रवर्णा'दिति न्यायात्, तस्मादपहतपाप्मेत्यादिभिः हेयगुणानां निषिध्यमानत्वात् गुणसामान्यनिषेधस्तत्पर्यवसायीति निरवद्यमिति पदस्याभिप्रायः । विशेषविधाने सति सामान्यनिषेधस्तद्व्यतिरिक्तविषय एव, यथाऽग्निषोमीयहिंसान्यतिरिक्तविषयो 'न हिंस्यात्सर्वा भूतानी'ति सामान्यनिषेधः । तस्मात्सत्यकामस्सत्यसङ्कल्प इत्यादिभिर्मङ्गलगुणविधाने सति गुणनिषेधस्तद्व्यतिरिक्तविषय इति ' सर्वकल्याणगुणाकरमितिपदस्याभिप्रायः । आर्थगुणनिषेधः परिहरिष्यते, सामानाधिकरण्यान्यथानुपपत्त्या निर्विशेष-

नीकाकारतावोधनेऽपि तत्तत्प्रत्यनीकाकारतायां भेदस्यावर्जनीयत्वान्न निर्विशेषवस्तुसिद्धिः ।

वस्तुसिद्धिं दूषयति ( सर्वेत्यादिना ) विशेषणभेदविवक्षायां विशेषणभेदेन विशेष्यभेदात्, युगपदभिधाने विशेषणानामप्यैक्यप्रसङ्गात्, क्रमेणाभिधाने विशेषणानामन्योन्यविशेषणविशेष्यभावप्रसङ्गाच्च, वस्तुमात्रैक्यपरमेव सामानाधिकरण्यं, तत्र प्रतियोगिरूपप्रवृत्तिनिमित्तभेदसम्भवान्न सामानाधिकरण्यलक्षणहानिः । वाक्यतात्पर्यानुगुणा लक्षणा तद्विरुद्धमुख्यवृत्तेर्बलीयसी । सर्वपदलक्षणा च न दोषः, विषं भुङ्क्ष्वेत्यादिषु दर्शनात्, सर्वपदलक्षणायामपि समानविभक्त्या तात्पर्यनिश्चयः, शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिवच्च न व्यावृत्तिर्धर्मः, स्वरूपमेव व्यावृत्तिः । न च पर्यायता, कार्ष्ण्यव्यावृत्तपीतिमव्यावृत्तादिशब्दवदिति हि पूर्वपक्षशरीरम्, विरुद्धविशेषणानामेव विशेष्यभेदापादकत्वान्न विशेषणभेदे विशेष्यभेदः, युगपदभिधानेऽपि समानविभक्त्या. विशेष्यमात्रैक्यप्रतिपादनान्न विशेषणैक्यप्रसङ्गः, "पदजातं श्रुतं सर्व"मित्यादिन्यायेन सर्वैः पदैर्युगपदेवानेकविशेषणविशिष्टैकार्थाभिधानान्न विशेषणानामन्योन्यविशेषणविशेष्यभावप्रसङ्गः । उद्देश्योपादेयविभागस्तु परामर्शदशायामेवावगम्यते इति न विशेषणविवक्षायाः काचिदनुपपत्तिरित्येतावदभिप्रेतम्, श्रीभाष्यकारैः श्रीभाष्येऽभिहितत्वात् । अत्र शौक्ल्यादिदृष्टान्तव्यावृत्तिं द्विधाह ( सर्वेत्यादिना ) (-सर्वप्रत्यनीकाकारतावोधनेऽपीति ) कार्ष्ण्यव्यावृत्तमित्यादिषु प्रतियोगितव्यावृत्ती शब्दस्वारस्यादेव सम्प्रतिपन्ने, अत्र त्वन्वयरूपार्थाभिधायिनः शब्दस्य व्यतिरेकमुखेनार्थपरिकल्पनमयुक्तमित्यपि शब्दस्य भावः । एवं शौक्ल्यादिदृष्टान्ताच्छब्दवैषम्यमुक्तम् । अथार्थवैषम्यमभिप्रेत्याह ( तत्तत्प्रत्यनीकतांभेदस्यावर्जनीयत्वादिति ) शौक्ल्यस्य कस्यचिद्धर्मभूतत्वात्स्वरूपमेव व्यावृत्तिः, स्वरूपे प्रतिपन्ने अध्यासासहत्वाच्च,

ननु च ज्ञानमात्रं ब्रह्मेति प्रतिपादिते निर्विशेषज्ञानमात्रं ब्रह्मेति निश्चीयते, नैवम्, स्वरूपनिरूपणधर्मशब्दा हि धर्ममुखेन स्वरूपमपि प्रतिपादयन्ति गवादिशब्दवत्, तथाह सूत्रकारः [1]"तद्गुणसारत्वात् तद्व्यपदेशः प्राज्ञवत्" [2]'यावदात्मभावित्वाच्च न दोष' इति, ज्ञानेन धर्मेण स्वरूपमपि निरूपितं न तु ज्ञानमात्रं ब्रह्मेति । कथमिदमवगम्यत इति चेत् "यः सर्वज्ञः सर्वविद्" इत्यादिज्ञातृत्वश्रुतेः, "पराऽस्य शक्ति-

---

ब्रह्म तु न कस्यचिद्धर्मभूतं स्वरूपे प्रतिपन्ने अध्याससहं च, तस्मात्स्वरूपातिरेकेण व्यावृत्तिरभ्युपगन्तव्येति भावः ।

अथार्थगुणनिषेधं वदन् परिचोदयति (नन्विति) न हि ज्ञानं ज्ञानान्तराश्रयो भवति, तस्मात् ज्ञानस्वरूपत्वप्रतिपादनेन गुणनिषेधः सिद्ध इत्यर्थः । परिहरति (नैवमिति) स्वरूपेत्यादि स्पष्टं, (तथाहेति) धर्मवाचिशब्दस्य धर्मिपर्यन्तत्वे लक्षणा स्यादिति शङ्कापरिहाराय 'यावदात्मेति' सूत्रमुदाहृतम् । जातिगुणयोर्व्यक्तिगुणिपर्यन्तत्वस्य लोके प्रत्यक्षसिद्धत्वात्तद्वाचिशब्दानां तत्पर्यन्तत्वमाश्रितम्, अत्र तु ज्ञानस्य धर्म्यन्तरनिष्ठत्वं कथमित्यभिप्रायेण चोदयति (ज्ञानेनेति) तत्र प्रमाणं दर्शयति 'यः सर्वज्ञस्सर्ववित्' इति, ज्ञानस्वरूपत्वश्रुत्यनुगुणं ज्ञातृत्वस्वरूपताश्रुतिर्नेया, न तु ज्ञातृत्वश्रुत्यनुगुणम्, ज्ञानस्वरूपताश्रुतिर्नेयेत्यत्राह (परास्य शक्तिरिति) ज्ञातृत्वश्रुतीनां भूयस्त्वात् बहुस्वारस्यानुगुणं कतिपयश्रुतिर्नेयेत्यर्थः । 'द्वैधे बहूनां

---

[1] ब्र० सू० २-३-२९ ॥ [2] ब्र०सू०२-३-३० ॥

र्विविधैव—श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"
[1]"विज्ञातारमरे केन विजानीया"दित्यादिश्रुतिशतसमधिगतमिदम् । ज्ञानस्य धर्ममात्रत्वाद्धर्ममात्रस्यैकस्य वस्तुत्वप्रतिपादनानुपपत्तेश्च, अतः सत्यज्ञानादिपदानि स्वार्थभूतज्ञानादिविशिष्टमेव ब्रह्म प्रतिपादयन्ति । तत्त्वमिति द्वयोरपि पदयोः स्वार्थप्रहाणेन निर्विशेषवस्तुस्वरूपोपस्थापनपरत्वे मुख्यार्थपरित्यागश्च । ऐक्ये तात्पर्यनिश्चयान्न लक्षणा दोषः 'सोऽयं देवदत्त' इतिवत् । यथा

वचन'मिति हि स्मृतिः, 'भूयसां स्याद्बलीयस्त्व'मिति हि मीमांसकाः । स्वाभाविकीतिश्रुत्या ज्ञातृत्वादेराविद्यकत्वादि च परिहृतं भवति । ज्ञानशब्दस्य ज्ञातृत्वपर्यन्तत्वे तु न कस्यचिन्नैरर्थक्यम्, ज्ञातृशब्दस्य ज्ञानपरत्वे तृच्प्रत्ययो निरर्थकः स्यादित्ययमर्थोऽर्थसिद्ध इति न कण्ठोक्तः। ज्ञानस्य ज्ञानाद्याश्रयत्वं व्याप्तिविरुद्धमित्यत्राह (ज्ञानस्येति)

एकस्य धर्मिरहितस्य ज्ञानस्य ज्ञानान्तराश्रयत्वे तु न श्रुतिविरोधः, उपपादितप्रकारात् व्याप्तिविरोधश्चेत्— ज्ञानं कस्यचिद्धर्मत्वेन दृष्टमिति तवापि तुल्यम्, श्रुतिबलात् स्वतन्त्रत्वं चेत्, तत एव ज्ञानाद्याश्रयत्वसम्भव इति प्रतिबन्दीमुखेन व्याप्तिविरोधः परिहृतः । परपक्षस्य धर्मभूतस्य स्वतन्त्रवस्त्वन्तरत्वकल्पनानुपपत्तिर्दूषणं चोक्तं भवति । अत इत्यादि स्पष्टम् । अथ प्रस्तुतेऽर्थे दूषणान्तरमाह ( तत्त्वमित्यादिना ) लक्षणा स्यादित्यर्थः, तात्पर्यानुगुणा लक्षणा प्रबलेति चोदयति ( ऐक्येति ) दृष्टान्तं विशदयति ( यथेति ) परि-

1. बृ० ४–४–१४ ॥

सोऽयमित्यत्र स-इतिशब्देन देशान्तरकालान्तर-सम्बन्धी पुरुषः प्रतीयते, अयमिति च संनिहितदेशवर्तमानकालसम्बन्धी, तयोस्सामानाधिकरण्ये-नैक्यं प्रतीयते, तत्रैकस्य युगपद्विरुद्धदेशकालसम्बन्धितयाप्रतीतिर्न घटत इति द्वयोरपि पदयोः स्वरूपमात्रोपस्थापनपरत्वं स्वरूपस्य चैक्यं प्रतिपाद्यत इति चेत्— नैतदेवं, सोऽयं देवदत्त इत्यत्रापि लक्षणागन्धो न विद्यते विरोधाभावात् एकस्य भूतवर्तमानक्रियाद्वयसम्बन्धो न विरुद्धः, देशान्तरस्थितिर्भूता, संनिहितदेशस्थितिर्वर्तते, अतो भूतवर्त्तमानक्रियाद्वयसम्बन्धितयैक्यप्रतिपादनमविरुद्धम्, देशद्वयविरोधश्च कालभेदेन परिहृतः । लक्षणायामपि न द्वयोरपि पदयोर्लक्षणासमाश्रयणम्, एकेनैव लक्षितेन विरोधपरिहारात्, लक्षणाभाव एवोक्तः, देशान्तरसंब-

---

हरति ( नैतदित्यादिना ) अन्यतरपदस्यापि न लक्षणेत्यभिप्रायेण गन्धशब्दः । विरोधाभावं विवृणोति ( एकस्येति ) क्रियाद्वयं किमित्यत्राह ( देशान्तरेति ) तथापि देशद्वयसम्बन्धो विरुद्ध इत्यत्राह ( देशद्वयेति ) कालद्वयसम्बन्धविरोधे क्षणिकत्वप्रसङ्गाद्देशद्वयसम्बन्धाविरोध इत्यर्थः । देशद्वयसम्बन्धविरोधे तीर्थयात्रादिविधानानुपपत्तिश्चाभिप्रेता । अथ पदद्वयलक्षणायां दूषणमाह ( लक्षणायामपीति ) लक्षणाभाव एवेत्यादि स्पष्टम्, सोऽयं देवदत्त इत्यादौ

न्धितया भूतस्यैवान्यदेशसंबन्धितया वर्तमानत्वाविरोधात् । एवमत्रापि 'जगत्कारणभूतस्यैव परस्य ब्रह्मणो जीवान्तर्यामितया जीवात्मत्वमविरुद्धमिति प्रतिपादितम् । यथाभूतयोरेव हि द्वयोरैक्यं सामानाधिकरण्येन प्रतीयते, तत्परित्यागेन स्वरूपमात्रैक्यं न सामानाधिकरण्यार्थः; "भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्य"मिति हि तद्विदः, तथाभूतयोरेवैक्यं सम्पादितमस्माभिः । उपक्रमविरो

---

लक्षणा न स्यात्, अत्र तु तत्त्वम्पदावगतार्थविरोधाल्लक्षणैव स्यादित्यत्राह (एवमत्रापीति) जीवतादात्म्यं स्वरूपैक्ये शरीरशरीरिभावे च साधारणमिति तद्विशेषितं जीवान्तर्यामितयेति, यदुक्तं— तात्पर्यविरुद्धमुख्यवृत्तेरपि तात्पर्यानुगुणा लक्षणा प्रबलेति, तच्छ्रुत्या परिहरन्नर्थाद्दूषणान्तरं चाह (यथाभूतयोरिति) यथाभूतयोः— यद्विशेषणविशिष्टयोः, तत्परित्यागेन— तद्विशेषणपरित्यागेन, शब्दप्रतिपन्नविशेषणपरित्यागस्य सामानाधिकरण्यप्रतिपाद्यत्वे सति हि तदनुगुणलक्षणाया बलीयस्त्वम्, यद्विशेषणं प्रवृत्तिनिमित्ततयाऽपेक्षितं तद्विशेषणपरित्यागे सामानाधिकरण्यस्य तात्पर्यमेव नास्ति, प्रत्युत सामानाधिकरण्यापेक्षित एव विशेषणस्वीकारः । अतस्तात्पर्यानुगुण्याभावाल्लक्षणा न बलीयसीत्यर्थः । विशेषणान्वयापेक्षा कुत इत्यत्राह (भिन्नेति) विशेषणपरित्यागरूपानुपपत्तिर्नास्मत्पक्ष इत्याह (तथा भूतयोरिति) एवं शङ्कापरिहारः कृतः, प्रवृत्तिनिमित्तभेदाभावात्सामानाधिकरण्यलक्षणहानिरूपं दूषणमुक्तं च भवति । उपक्रम-

ध्युपसंहारवाक्यतात्पर्यनिश्चयश्च न घटते, उपक्रमे हि "तदैक्षत बहु स्या"मित्यादिना सत्यसङ्कल्पत्वं जगदेककारणत्वमप्युक्तम्, तद्विरोधि चाविद्याश्रयत्वादि ब्रह्मणः ।

अपि चार्थभेदतत्संसर्गविशेषबोधनकृतपदवाक्यस्वरूपतालब्धप्रमाणभावस्य शब्दस्य निर्विशेषवस्तुबोधनासामर्थ्यान्न निर्विशेषवस्तुनि शब्दः प्रमाणम्, निर्विशेष इत्यादिशब्दास्तु केनचिद्विशे-

---

विरोधं दूषणमाह (उपक्रमेति) तदेवोपपादयति (उपक्रमे हीत्यादिना) ततः किमित्यत्राह (तद्विरोधि चेति)।

एवं प्रकृतपरामर्शितच्छब्दावगतगुणगणबाधः, पदद्वयलक्षणा, सामानाधिकरण्यलक्षणहानिः, उपक्रमविरोधश्चेति चत्वारि दूषणान्युक्तानि । अथ निर्विशेषवस्तुनि प्रमाणाभावो निरूप्यते (अपि चेत्यादिना) (अर्थभेदेति) प्रकृतिप्रत्ययार्थभेदबोधनकृतं पदत्वम्, अनेकपदार्थसंसर्गविशेषबोधनकृतं वाक्यत्वमित्यर्थः । न केवलं प्राबल्यदौर्बल्यनिरूपणेन सविशेषनिर्विशेषविषयनिश्चयः, स्वरूपसिद्धिरेव सविशेषविषयत्वेनेति स्वरूपशब्दस्य भावः । प्रमाणभावः— प्रमितिजनकत्वं, निर्विशेषवस्तुनि न शब्दः प्रमाणमिति न वाच्यं, निर्विशेषशब्दो हि तत्प्रतिपादकः । निर्विशेषशब्देन निर्विशेषवस्तु प्रमितं चेत् न तद्दूष्यम्, अप्रमितं चेन्नतराम्, तस्मान्निर्विशेषवस्तुनि शब्दः प्रमाणमेवेत्यत्राह (निर्विशेष इत्यादिशब्दास्त्विति) न हि निर्विशेषशब्दो निर्विभक्तिकः पदान्तरानन्वितः प्रमितिजनकः, किं तु सविभक्तिकः पदान्तरान्वित एव प्रमितिजनकः । तस्माद्विभक्ति-

-षेण विशिष्टतयाऽवगतस्य वस्तुनो वस्त्वन्तरावगतविशेषनिषेधकतया बोधकाः, इतरथा तेषामप्यनवबोधकत्वमेव, प्रकृतिप्रत्ययरूपणेण पदस्यैवानेकविशेषगर्भितत्वात्, अनेकपदार्थसंसर्गबोधकत्वाच्च वाक्यस्य।

अथ स्यात्- नास्माभिर्निर्विशेषे स्वय-

---

पक्षान्तरावगतविशेषा अपि न निर्विशेषशब्देन निषेध्याः, तस्मात् कतिपयविशेषनिषेधपरतया बोधका निर्विशेषादिशब्दाः, न कृत्स्नविशेषनिषेधपराः। तथा सति माता मे वन्ध्येतिवद् व्याहतिः स्यात्, तस्मान्निर्विशेषशब्दो निर्विशेषवस्तुनि न प्रमितिजनक इत्यर्थः। बोधकत्वं प्रमितिजनकत्वम्, अनवबोधकत्वमेवोपपादयति ( प्रकृतिप्रत्ययरूपेणेति ) प्रमिताप्रमितविकल्पोऽतिदुःस्थः, तथा सति सर्वेषु दर्शनेषु पूर्वपक्षोपन्यासतन्निरसनानुपपत्तेः। पूर्वपक्षः प्रमितश्चेन्न दूष्य इति, अप्रमितश्चेन्न दूष्य इति, पूर्वपक्षस्तु प्रतीत एव, न तु प्रमितः, प्रतीतिसिद्धत्वाच्च दूषणमपि युक्तमिति चेत् तर्हि 'अङ्गुल्यग्रे' इत्यादिवाक्यवत् निर्विशेषशब्देन प्रतीतिर्जायते, न तु प्रमितिः। तस्मान्निर्विशेषवस्तुप्रतीतं दूष्यमेवेत्यभिप्रायेण न निर्विशेषे वस्तुनि शब्दः प्रमाणमित्युक्तम्, निर्विशेषवस्तुविषयप्रतीतिजनकत्वं नास्माभिर्निषिध्यते, किं तु प्रमितिजनकत्वमेव निषिध्यते, तस्मान्न प्रमिताप्रमितविकल्पावकाशः। अतो निर्विशेषादिशब्दाः कतिपयविशेषनिषेधपराः, कृत्स्ननिषेधपरत्वे व्याघातादेव न प्रमितिजनका इत्यर्थः।

एवं निर्विशेषवस्तुनो निष्प्रमाणकत्वमुक्तम्, स्वयम्प्रकाशस्य वस्तुनः प्रमाणानपेक्षत्वाच्छब्दो भेदनिषेधपर एवेति शङ्कते ( अथ स्यादित्यादिना ) प्रमाणानपेक्षत्वे वेदान्तवैयर्थ्यमित्यत्राह

म्प्रकाशे वस्तुनि शब्दः प्रमाणमित्युच्यते; स्वतः सिद्धस्य प्रमाणानपेक्षत्वात्, सर्वैः शब्दैस्तदुपरागविशेषा ज्ञातृत्वादयः सर्वे निरस्यन्ते, सर्वेषु विशेषेषु निवृत्तेषु वस्तुमात्रमनवच्छिन्नं स्वयंप्रकाशं स्वत एवावतिष्ठत— इति, नैतदेवम्, केन शब्देन तद्वस्तु निर्दिश्य तद्गता विशेषा निरस्यन्ते, ज्ञप्तिमात्रशब्देनेति चेन्न, सोऽपि सविशेषमेव वस्त्ववलम्बते, प्रकृतिप्रत्ययरूपेण विशेषगर्भित्वात्तस्य । ज्ञा अवबोधन इति सकर्मकः सकर्तृकः क्रियाविशेषः क्रियान्तरव्यावर्त्तकस्व-

---

(सर्वैः शब्देरिति) तदुपरागविशेषाः तदारोपितविशेषा इत्यर्थः। स्वत एव— प्रमाणान्तरनिरपेक्षम्, परिहरति (नैतदित्यादिना) (केन शब्देनेति) केनचित्पदेन ब्रह्म निर्दिश्य तद्विशेषा निरसनीयाः, अनिर्दिश्य विशेषनिरसने ब्रह्मणोऽपि स्वेतरव्यावृत्तत्वेन विशेषत्वात्, विशेषनिषेधे ब्रह्मापि निषिद्धं स्यादिति तत्परिहाराय ब्रह्म केनचित्पदेन निर्देष्टव्यमेव वेदान्तेषु, श्रूयमाणानां ब्रह्मवाचिपदानां निर्वाहार्थं च केनचित्पदेन ब्रह्मणो निर्देश्यत्वमभ्युपगन्तव्यमित्यभिप्रायेण केन शब्देनेत्युक्तम्, ज्ञप्तिमात्रेत्यादि स्पष्टम् । कथं सविशेषवस्त्ववलम्बत इत्यत्राह (प्रकृतिप्रत्ययरूपेणेत्यादि) तदेव विवृणोति (ज्ञा अवबोधन इति) ज्ञप्तिमात्रशब्दस्य प्रस्तुतत्वात् 'ज्ञा अवबोधने' इति धातुरुक्तः। इदं ब्रह्मवाचिसर्वपदानां प्रकृतिप्रत्ययविभागस्य प्रदर्शनार्थम्, (क्रियाविशेष इति) धात्वर्थत्वाद्धर्म्यन्तरनिष्ठत्वाच्च क्रियाविशेष इत्युक्तम्, न तु स्पन्दनात्मकत्वात्, (क्रियान्तरव्यावर्तक

भावविशेषश्च प्रकृत्याऽवगम्यते, प्रत्ययेन लिङ्ग-सङ्ख्यादयः, स्वतः सिद्धावप्येतत्स्वभावविशेषविरहे सिद्धिरेव न स्यात् । अनन्यसाधनस्वभावतया हि ज्ञप्तेः स्वतः सिद्धिरुच्यते, ब्रह्मस्वरूपं कृत्स्नं सर्वदा स्वयमेव प्रकाशते चेत्– न तस्मिन्नन्यधर्माध्यासः सम्भवति । न हि रज्जुस्वरूपेऽवभासमाने सर्पत्वादिरध्यस्यते, अत एव हि भवद्भिराच्छादिकाऽविद्याऽभ्युपगम्यते, ततश्च

---

स्वभावविशेषश्चेति ) व्यावर्तकस्वभावः– स्वयम्प्रकाशत्वम् , क्रियान्तराणि हि जडरूपाणि, ( लिङ्गसङ्ख्यादय इति ) ज्ञानज्ञप्त्यादिशब्दानां लिङ्गस्य शब्दसाधुत्वमात्रार्थत्वेऽपि देवेश्वरपुरुषोत्तमादिशब्दानां लिङ्गस्यार्थवत्वात् लिङ्गसंख्यादय इत्युक्तम् , स्वयंप्रकाशत्वसिद्धिरपि सविशेषत्वादेवेत्याह ( स्वतः सिद्धावपीति ) एतत्स्वभावविशेषविरहे–सकर्मकत्वसकर्तृकत्वविरहे, सिद्धिरेव–प्रमाणमेव न स्यादित्यर्थः । कुत इत्यत्राह ( अन्यसाधनस्वभावतयेति ) ज्ञातुर्विषयव्यवहारहेतुतया हि स्वयंप्रकाशत्वं त्वया साधितमित्यर्थः । स्वसम्बन्धादर्थान्तरे तद्व्यवहारहेतुत्वं हि स्वयंप्रकाशत्वानुमानहेतुः । एवं निर्विशेषत्वे स्वयंप्रकाशत्वानुपपत्तिरुक्ता । निर्विशेषत्वे आच्छादिकाविद्यानिवृत्त्यनुपपत्तिमाह ( ब्रह्मस्वरूपमित्यादिना ) कृत्स्नं [1]ज्ञातव्यविशेषराहितम् । असम्भवः कथमित्यत्राह ( नहीति ) कृत्स्नावभासेऽध्यासायोगात् , अनवभासमानांशः स्वीकार्य इत्यर्थः । ( अत एवेति ) अत एव–अज्ञातांशसम्भवादेव, न; स्वाच्छाद्याभावे आच्छादनमुपपद्यते, तस्मादज्ञातांशोऽभ्युगन्तव्य इत्यर्थः । ( ततश्चेति )

---

१. ज्ञातव्याविशेष–इति पा० ॥

शास्त्रीयनिवर्तकज्ञानस्य ब्रह्मणि तिरोहितांशो विषयः । अन्यथा तस्य निवर्त्तकत्वं च न स्यात्, अधिष्ठानातिरेकिरज्जुत्वप्रकाशनेन हि सर्पत्वं बाध्यते । एकश्चेद्विशेषो ज्ञानमात्रे वस्तुनि शब्देनाभिधीयते, स च ब्रह्मविशेषणं भवतीति सर्वश्रुतिप्रतिपादितसर्वविशेषणविशिष्टं ब्रह्म भवति, अतः प्रामाणिकानां न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः ।

निर्विकल्पकप्रत्यक्षेऽपि सविशेषमेव वस्तु

---

न हि पुरोवर्तिमात्रविषयज्ञानमेव भ्रमनिवर्तकम्, तस्माद्ब्रह्मणि पूर्वमज्ञातांशसम्भव एव निवर्तकज्ञानस्य निवर्तकत्वमित्यर्थः । तिरोधाननिवृत्तिसिद्ध्यर्थमेकविशेषाभ्युपगतिं शङ्कते ( एकश्चेदिति ) ( स च ब्रह्मविशेषणं भवतीति ) उपलक्षणत्वव्यावृत्त्यर्थं विशेषणशब्दः ज्ञाप्यत्वसिद्धये ब्रह्मगताध्यासनिवर्त्तकत्वासिद्धये च विशेषणमित्युक्तम्, न ह्यन्यगतधर्मज्ञानेनान्यविषयभ्रमनिवृत्तिः, पुरोवर्तिगतशुक्तित्वधर्मज्ञानेनैव हि तद्गतरूप्यत्वभ्रमनिवृत्तिरित्यभिप्रायः । अत इति स्पष्टम्

अथ निर्विकल्पकप्रत्यक्षस्य निर्विशेषविषयत्वमाशङ्क्य व्युदस्यति ( निर्विकल्पकप्रत्यक्षेऽपीत्यादिना ) बौद्धादयः सर्वविशेषशून्यविषयं निर्विकल्पकमाचक्षते, तदयुक्तम्, योग्यानुपलम्भनिरस्तत्वात्, यत्किञ्चिदपि वस्तु कतिपयव्यावृत्तं प्रतीयते, सर्वस्माद् व्यावृत्तं वा प्रतीयते इति, तेनाकारेण सविशेषत्वान्न सर्वविशेषशून्यत्वम्, जातिगुणद्रव्यादीनामन्योन्यसम्बन्धं विना पृथक्पृथगुपलम्भो निर्विकल्पकप्रत्यक्षमिति केचिदाचक्षते, तच्च योग्यानुपलम्भनिरस्तम्, कल्प्यते

प्रतीयते, अन्यथा सविकल्पके सोऽयमिति पूर्वावगतप्रकारविशिष्टप्रत्ययानुपपत्तेः, वस्तुसंस्थानविशेषरूपत्वाद्गोत्वादेर्निर्विकल्पकदशायामपि ससंस्थानमेव वस्त्वित्थमिति प्रतीयते। द्वितीयादिप्रत्ययेषु तस्यैव संस्थानविशेषस्यानेकवस्तुनिष्ठतामात्रं प्रतीयते, संस्थानरूपप्रकाराख्यस्य पदार्थस्यानेकवस्तुनिष्ठतयाऽनेकवस्तुविशेषणत्वं

---

चेत्—तत्र को हेतुः, दण्डदेवदत्तादिषु विशेषणविशेष्ययोः पृथगुपलम्भपूर्वकसहोपलम्भदर्शनादिति चेत्,— तत्किं सम्बन्धवेलायामुतासम्बन्धवेलायाम्? असम्बन्धवेलायां पृथग्ग्रहणमसम्बन्धप्रयुक्तम्, न विशेषणविशेष्यभावप्रयुक्तम्, सम्बन्धवेलायां तु विशेषणविशेष्यभावेनैव ग्रहणम्, तस्मान्नियमेन सम्बन्धिनां जातिव्यक्त्यादीनामसम्बन्धप्रयुक्तं पृथग् ग्रहणं नास्ति। नियमेन सम्बन्धेऽपि गन्धस्य पृथिव्यादिषु पृथगुपलम्भ इति चेत्—तद्भिन्नसामग्रीवेद्यत्वात्, न तु विशेषणविशेष्यभावात्, तस्माज्जातिव्यक्त्यादेरेकसामग्रीवेद्यत्वे सति सम्बन्धनियमाच्च पृथग् गृहणमुपपद्यत इति विशिष्टविषयमेव प्रत्यक्षम्, तस्मात्प्रथमपिण्डगृहणं निर्विकल्पकम्, द्वितीयादिपिण्डगृहणं सविकल्पकमित्यस्यार्थस्य सिद्धवत्कारेण निर्विकल्पकस्य सविशेषविषयतां दर्शयति (निर्विकल्पकेत्यादिना) कुतः सविशेषविषयत्वमित्यत्राह (अन्यथेति) प्रथमपिण्डगृहणेऽनुवृत्त्यगृहणाद्गोत्वादिगृहणं नोपपद्यत इत्यत्राह (वस्तुसंस्थानेति) न ह्यनुवृत्तिर्जातिः, अपि तु अनुवृत्तैव जातिः, 'अनुवृत्ता जातिर्नानुवृत्ति'रिति हि पञ्चिकाकारः, तस्मादनुवृत्त्यगृहणेऽपि इदमित्थमिति गृहणे इत्थमंशो गोत्वादिर्गृहीत एव अनेकव्यक्तिसम्बन्धरूपानुवृत्त्यगृहणमनेकव्यक्तिगृहणरूपसामग्र्यभा-

द्वितीयादिप्रत्ययावगम्यमिति द्वितीयादिप्रत्यया-
स्सविकल्पका इत्युच्यन्ते ।

अत एवैकस्य पदार्थस्य भिन्नाभिन्नरूपेण द्यात्मकत्वं विरुद्धं प्रत्युक्तम्, संस्थानस्य संस्थानिनः प्रकारतया पदार्थान्तरत्वं, प्रकारत्वादेव

---

वात् । तस्मान्निर्विकल्पकं सविशेषविषयमित्यर्थः । निर्विकल्पकेऽपि गोत्वादिर्गृह्यते चेत् निर्विकल्पकसविकल्पकयोः को विशेषः, कति-पयविशेषगृहणं कतिपयविशेषाग्रहणं च उभयत्र तुल्यमित्यत्रा- ( द्वितीयादिप्रत्ययेष्विति ) अनेकवस्तुनिष्ठता नाम तत्तद्वस्तुसंस्थान-सादृश्यम्, प्रथमपिण्डगृहणस्य द्वितीयादिपिण्डग्रहणस्य च निर्विक-ल्पसविकल्पशब्दौ कथं वाचकावित्यत्राह ( संस्थानरूपेति ) संस्कारप्रमोषवता पुरुषेण द्वितीयादिगृहणेऽपि नानुवृत्तिगृहणमिति चेन्न, द्वितीयादित्वेन द्वितीयादिगृहणं विवक्षितम्, तस्मान्न दोषः संस्कारसचिवत्वतद्रहितत्वसामग्रीभेदेनानुवृत्तिधर्मविशिष्टत्वतद्रहितत्व-गृाह्यभेदेन च सविकल्पकनिर्विकल्पकयोर्वैषम्यमित्यभिप्रायः ।

प्रसङ्गाद्भेदाभेदं व्युदस्यति (अत एवेत्यादिना)एकस्य द्यात्मकत्वं नेव विरुद्धम्, अपि तु भिन्नाभिन्नरूपेण द्यात्मकत्वं विरुद्धमित्यर्थः । अत एवेत्यत्र गर्भितमर्थं विवृणोति (संस्थानस्येति ) भेदाभेदे चत्वारो हेतवः- सहोपलम्भनियमः, सामानाधिकरण्यप्रत्ययः, एकशब्दानुविद्धप्रत्ययः प्रथमपिण्डगृहणे भेदकाकारागृहणादभेदप्रतिपत्तिश्चेति, एते परिह्रि-यन्ते ( संस्थानस्येत्यादिना ) प्रकारत्वादेव—नियतप्रकारत्वादित्यर्थः अपृथक्सिद्धधर्मत्वात्पृथक्प्रतिपत्त्यनर्हत्वमिति यावत्, तत्कृतः पृथग-पनुलम्भः, सहोपलम्भनियमस्तावत्संप्रतिपन्नैक्येषु भिन्नेषु च न दृष्टः तत्र सहभावो भेदसाधकः, द्वयोरेव हि सहभावः, नियमांशः

पृथक्सिद्ध्यनर्हत्वं पृथगनुपलम्भश्चेति न द्व्यात्मकत्वसिद्धिः।

अपि च निर्विशेषवस्तुवादिना स्वयम्प्रकाशे वस्तुनि तदुपरागविशेषाः शब्दैः सर्वैर्निरस्यन्त इति वदता के ते शब्दा निषेधका इति वक्तव्यम्, "वाचारम्भणं विकारो नामधेयं

---

नोभयत्र। किञ्च भेदसाधकसहभावस्य नियमो भेदनियमसाधकः, एकसामग्रीवेद्यत्वे सति पृथक्स्थितेः, अपृथक्स्थितत्वे सति भिन्नसामग्रीवेद्यत्वाद्वा सहोपलम्भनियमाभावः। अत्र त्वपृथक्स्थितत्वे सत्येकसामग्रीवेद्यत्वात्सहोपलम्भनियमः, न त्वभेदात्, मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमप्यपृथक्सिद्धप्रकारत्वादेवोपपद्यते, एकशब्दानुविद्धप्रत्ययोऽपि धर्म्यैकत्वात्, न तु धर्मधर्मिणोरैक्यात् इति हेतुत्रयपरिहारः प्रकारत्वादेवेत्यादिनाऽभिप्रेतः। प्रथमपिण्डग्रहणे भेदाग्रहः संस्थानस्येत्यादिना परिहृतः। कथम्? उच्यते— व्यावृत्त्यनुवृत्त्यग्रहणं हि भेदाग्रह उच्यते, न केवलं व्यावृत्त्यनुवृत्ती एव भेदकधर्मौ, विशेषणविशेष्यभावोऽपि भेदकः, प्रथमपिण्डग्रहणेऽपीदमित्थमिति विशेषणविशेष्यभावेनैव ग्रहणाद्भेदोऽपि गृहीत एवेति।

एवं प्रसङ्गाद्भेदाभेदनिरासः कृतः, पूर्वमस्तुतं हि वेदान्तवाक्यानां भेदनिरासपरत्वम्, तत्र वेदान्तवाक्यानां भेदनिरासपरत्वेऽपि केनचिच्छब्देन ब्रह्मणो निर्देश्यत्वात्स्वयंप्रकाशत्वातिरोधानादध्यासतन्निवृत्तिभ्यां च सविशेषत्वमुक्तम्, अत्र वेदान्तवाक्यानां भेदनिरासपरत्वमेवानुपपन्नमित्युच्यते (अपि चेत्यादिना) तदुपरागविशेषाः—तदारोपितविशेषाः। के ते शब्दा निषेधका इति चोद्ये उत्तरं वक्तव्यं, तत्त्वशक्यमेवेत्यर्थः, पूर्वं निर्विशेषपरत्वनिरासाय सद्विद्या व्याख्याता,

मृत्तिकेत्येव सत्य"मिति विकारनामधेययोर्वाचारम्भणमात्रत्वात् यत्तत्र कारणतयोपलक्ष्यते वस्तुमात्रं तदेव सत्यमन्यदसत्यमितीयं श्रुतिर्वदतीति चेत्—नैतदुपपद्यते, "एकस्मिन् विज्ञाते सर्वं विज्ञातं भवती"ति प्रतिज्ञाते अन्यज्ञानेनान्यज्ञानासम्भवं मन्वानस्यैकमेव वस्तु विकाराद्यवस्थाविशेषेण पारमार्थिकेनैव नानारूपमवस्थितं चेत्, तत्रैकस्मिन् विज्ञाते तस्माद्विलक्षणसंस्थानान्तरमपि तदेव वस्त्विति तत्र दृष्टान्तोऽयं निदर्शितः, नात्र कस्यचिद्विशेषस्य निषेधकः कोऽपि शब्दो दृश्यते, 'वाचारम्भण'मिति वाचा—व्यवहारेण आरभ्यत इति आरम्भणम्, पिण्डरूपेणावस्थि-

---

इदानीं तस्या भेदनिरासपरत्वमाशङ्क्य निराक्रियते (वाचेत्यादिना) वाचारम्भणमात्रत्वात्—वागालम्बनमात्रत्वात्, व्यावहारिकत्वात् अपारमार्थिकत्वादित्यर्थः। (यत्तत्र कारणतयोपलक्ष्यते वस्तुमात्रमिति) कार्येष्वनुवर्त्तमानं कारणं सन्मात्रं यद्वस्तु तदेवेत्यर्थः। शङ्कितमर्थं दूषयति (नैतदित्यादिना) वाचारम्भणमितिवाक्यस्यार्थः पूर्वापरसङ्गतो वाच्यः, स च त्वन्मते नोपपद्यत इति वक्तुं पूर्वोक्तशङ्कामनुवदति (एकस्मिन्नित्यादिना) (विकाराद्यवस्थाविशेषेणेति) विकारः—कार्य्यावस्था, आदिशब्देन कारणावस्था विवक्षिता, नानारूपं—नानावस्थम्, वाचारम्भणमिति पदस्यास्पष्टार्थत्वात्तद्व्याचष्टे (वाचेति) कर्मणि ल्युडित्यर्थः। (व्यवहारेणेति) प्रयोजनतया हेतुत्वमित्यर्थः। नामभेदात् कार्यभेदाच्च वैशेषिकोक्तं द्रव्यान्तरत्व-

-ताया मृत्तिकाया नाम चान्यत्, व्यवहारश्चान्यः, घटशरावादिरूपेणावस्थितायास्तस्या एव मृत्तिकाया अन्यानि नामधेयानि व्यवहाराश्चान्यादृशाः, तथाऽपि सर्वत्र मृत्तिकाद्रव्यमेकमेव नानासंस्थाननानानामधेयाभ्यां नानाव्यवहारेणारभ्यत इत्येतदेव सत्यमित्यनेनान्यज्ञानेनान्यज्ञानसम्भवो निदर्शितः। नात्र किञ्चिद्वस्तु निषिध्यत इति पूर्वमेवायमर्थः प्रपञ्चितः।

अपि च "येनाश्रुतं श्रुत"मित्यादिना ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वं प्रतिज्ञातं चेत् "यथा सोम्यैकेन मृत्पिण्डेन" इत्यादिदृष्टान्तः साध्यविकलः स्यात्। रज्जुसर्पादिवन्मृत्तिकाविकारस्य घटशरावादेरसत्यत्वं श्वेतकेतोः शुश्रूषोः प्रमाणान्तरेण युक्त्या चासिद्धमिति, एतदपि सिषाध-

---

गाशङ्क्य तच्च परिहरन् वाक्यार्थं योजयति ( पिण्डरूपेणेत्यादिना ) पूर्वं हि फलितार्थ उक्तः। अत्रान्वयार्थ उच्यते ( नानासंस्थाननानानामधेयाभ्यामिति ) अन्वितमित्यर्थः। इत्थम्भावे तृतीया, कर्तरि वा, ताभ्यामारभ्यते आलभ्यते सम्बध्यत इत्यर्थः, रलयोरविशेषः प्रसिद्धः, आलम्भः स्पर्शहिंसयोरिति नैघण्टुकाः। व्यवहारेण चेति पाठे नानासंस्थाननानानामधेयव्यवहारैरित्थंभूतमिति वा तैः सम्बध्यत इति वार्थः।

भेदनिरासपरत्वे दूषणान्तरमाह ( अपि चेति ) (प्रमाणान्तरेण

यिषितमिति चेत् यथेति दृष्टान्ततयोपादानं न घटते, "सदेव सोम्येदमग्र आसीदेकमेवाद्विती-य"मित्यत्र सदेवैकमेवेत्यवधारणद्वयेनाद्वितीयमि-त्यनेन च सन्मात्रातिरेकिसजातीयविजातीयाः सर्वे विशेषा निषिद्धा इति प्रतीयत इति चेत्-नैतदेवं, कार्यकारणभावावस्थाद्वयावस्थितस्यैकस्य वस्तुनः एकावस्थावस्थितस्य ज्ञानेनावस्थान्तरा-वस्थितस्यापि वस्त्वैक्येन ज्ञाततां दृष्टान्तेन दर्शयित्वा श्वेतकेतोरप्रज्ञातं सर्वस्य ब्रह्मकार-णत्वं च वक्तुं "सदेव सोम्येद"मित्यारब्धम् । इद-मग्रे सदेवासीत्- इति, अग्र इति कालविशेषः

---

युक्त्या चेति) प्रत्यक्षेण बाधादर्शनान्मिथ्यात्वासिद्धिः । व्यावर्त्तमानत्वा-दियुक्तेराभासत्वाच्च न मिथ्यात्वसिद्धिरिति भावः । एतदित्यादि स्पष्टं सदेवेत्यादिवाक्यस्य भेदनिरासपरत्वमाशङ्क्य दूषयति (सदेवेत्यादिना सर्व इत्यनेन स्वगतभेदा विवक्षिताः,तेषामपि विजातीयभेदान्तर्गतत्वात् (नैतदिति ) दृष्टान्तवाक्यानुगुण एव दार्ष्टान्तिकवाक्यस्यार्थो वर्णनी इत्यभिप्रायेण दृष्टान्तवाक्यस्यार्थमनुवदति ( कार्यकारणेत्यादिना सदेवेत्यादिवाक्ये तत्तत्पदोपस्थापितानेकविशेषान् दर्शयितुं विशेषो-स्थापकपदान्युपादत्ते . ( इदमग्रे सदेवासीदिति ) नायमन्वयक्रमः सदेवेदमग्र एकमेवासीदिति ह्यन्वयः, तस्मात्फलितान्विशेषान् वक्तुं तदुपस्थापकपदान्युपात्तानि । उपस्थापितविशेषानाह ( अग्र इतीति सदापत्तिरूपां क्रियामित्यनेनासीदितिपदस्यार्थ उक्तः । सच्छब्द

इदंशब्दवाच्यस्य प्रपञ्चस्य सदापत्तिरूपां क्रियां सद्द्रव्यतां च वदति, 'एकमे'वेति चास्य नानानामरूपविकारप्रहाणम्। एतस्मिन् प्रतिपादिते अस्य जगतस्सदुपादानता प्रतिपादिता भवति । अन्यत्रोपादानकारणस्य स्वव्यतिरिक्ताधिष्ठात्रपेक्षादर्शनेऽपि सर्वविलक्षणत्वादस्य सर्वज्ञस्य ब्रह्मणः सर्वशक्तियोगो न विरुद्ध इति अद्वितीयपदमधिष्ठात्रन्तरं वारयति। सर्वशक्तियुक्तत्वादेव ब्रह्मणः काश्चन श्रुतयः प्रथममुपादानकारणत्वं प्रतिपाद्य निमित्तकारणमपि तदेवेति प्रतिपादयन्ति, यथेयं श्रुतिः, अन्याश्च श्रुतयो ब्रह्मणो निमित्तकारण-

---

र्थमाह ( सद्द्रव्यतां चेति ) सदेव चेत्तदानीं को विशेष इत्यत्राह— ( एकमेवेति ) एतस्मिन् प्रतिपादिते— विभक्तनामरूपत्वेन भविष्यतोऽविभक्तनामरूपत्वे प्रतिपादिते, भाव्यवस्थाविशेषवतः प्रागवस्थायोग उपादानत्वमिति लक्षणादुपादानत्वं प्रतिपादितं भवतीत्यर्थः। अद्वितीयपदं व्याचष्टे ( अन्यत्रेति ) ( सर्वविलक्षणत्वादिति ) विलक्षणधर्मित्वाद्विलक्षणधर्मयोग उपपन्नः, यथा जलादिविलक्षणधर्मित्वादग्नेरुष्णत्वधर्मयोग इत्यर्थः । ब्रह्मणश्चेतनत्वात्प्रथमं निमित्ततां प्रतिपाद्य पश्चादुपादानान्तरनिषेधः कार्यः, तस्मात्प्रथममेवोपादानत्वप्रतिपादनमनन्तरं निमित्तान्तरनिषेधश्च नोपपद्यते, तस्मादस्य वाक्यस्य नायमर्थ इति शङ्कायामाह ( सर्वशक्तीति ) 'असद्वा इदमग्र आसीत्ततो वै सदजायत तदात्मानꣳस्वयमकुरुते'ति वाक्यं सर्वशक्तियुक्तत्वादेवेत्यादिग्रन्थे हृदि निहितम्, 'किꣳस्विद्वन'मित्यादिवाक्यकृता-

त्वमनुज्ञाय अस्यैवोपादानतादि कथमिति परि-
चोद्य सर्वशक्तियुक्तत्वादुपादानकारणं तदितराशे-
षोपकरणं च ब्रह्मैवेति परिहरन्ति, [1]"किꣳस्विद्वनं
क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टत-
क्षुः। मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्
भुवनानि धारयन्॥ ब्रह्म वनं ब्रह्म स वृक्ष आसी-
द्यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा
विब्रवीमि वो ब्रह्माध्यतिष्ठद् भुवनानि धारय-
न्निति सामान्यतो दृष्टेन विरोधमाशङ्क्य ब्रह्मण
सर्वविलक्षणत्वेन परिहार उक्तः। अतः 'सदे-

क्षेणाह ( निमित्तकारणतामनुज्ञायेति ) ( अन्याश्चेति ) अध्यतिष्ठ
भुवनानि धारयन्नित्यस्यार्थोऽभिप्रेतः। अयमर्थः— जगदुपक्रमेण ब्रह्म प्र-
तिपादयन्त्यः श्रुतय उपादानत्वपूर्वकं निमित्ततां वदन्तीति ब्रह्मोपक्र-
मेण तत्प्रतिपादयन्त्यः ब्रह्मणश्चेतनत्वेन निमित्तत्वपूर्वकमुपादानं
वदन्ति— इति, 'किंस्विद्वन'मित्यादिवनशब्देनाधिकरणकारकं विवक्षि-
तम्, निष्टतक्षुरिति बहुवचने न तात्पर्यम् 'अदितिः पाशा'नितिवत्,
मनीषिणः किं यूयमेवं पृच्छतेत्यर्थः। 'यदध्यतिष्ठ'दिति निमित्त-
त्वस्य संप्रतिपन्नत्वात्तदनुवादः, अधिकरणमुपादानं तद्व्यतिरिक्तस-
कलकारकवर्गश्च ब्रह्मैवेत्युत्तरमाह ( ब्रह्म वनमिति ) अधिकरणकार-
सर्वकारकोपलक्षणार्थम्, चोद्यपरिहाररूपेण ब्रह्मण एव सर्वविधका-
रणतोपपादने किं प्रयोजनमित्यत्राह (सामान्यतो दृष्टेनेति) तस्मात्सदे-
त्यादिवाक्यस्यासदुक्त एव वाक्यार्थ इत्याह (अत इति) निषेधार्थे वि-

[1] १. अष्ट० २-प्र० ८-अनु० ७-पं-८ ॥

सोम्येदमग्र आसी'दित्यत्राप्यग्र इत्याद्यनेकविशेषा ब्रह्मणः प्रतिपादिताः, भवदभिमतविशेषनिषेध-वाचकः कोऽपि शब्दो न दृश्यते, प्रत्युत जगद्ब्रह्मणोः कार्यकारणभावज्ञापनाय अग्र इति कालविशेषसद्भावः, आसीदिति च क्रियाविशेषः, जगदुपादानता जगन्निमित्तता च निमित्तोपादानयोर्भेदनिरसनेन तस्यैव ब्रह्मणस्सर्वशक्तियोगश्चेत्यप्रज्ञातास्सहस्रशो विशेषा एव प्रतिपादिताः। यतो वास्तवकार्यकारणभावादिज्ञापने प्रवृत्तमिदम्, अत एव 'असदेवेदमग्र आसी'दित्यारभ्यास-

पक्षानामनुवादः स्यादिति शङ्कायामादिशब्दोपात्तविशेषान् वदन् परिहरति (प्रत्युतेत्यादिना) अप्रज्ञाता इत्यनेन निषेधार्थमनुवाद इत्येतत्परिहृतम्, पूर्वयोजनायामसत्कार्यवादोपन्यासनिरासवाक्यस्याव्याख्यातत्वात्तदिदानीं व्याचष्टे (यत इत्यादिना) आदिशब्दादनुप्रवेशादयः, कार्यकारणभावादेः परमार्थस्यैव ज्ञापने प्रवृत्तमिदं सद्विद्याप्रकरणम्, कार्यकारणभावस्यापारमार्थ्ये असत्कार्यवादनिषेधोऽनुपपन्नः, सत्त्वं हि पारमार्थ्यं, कार्यमपरमार्थभूतं चेत् तस्य सत्त्वप्रतिपादनं विरुद्धम्, तस्मादसत्कार्यवादनिरासः सत्यत्वपक्ष एवोपपन्न इत्यर्थः। 'असदेवे'-त्यादिकं वाक्यं माध्यमिकपक्षप्रतिक्षेपपरमिति शङ्करेण व्याख्यातम्, तदनुपपन्नम्, 'असदेवेदमग्र आसी'दित्यग्रशब्दाभिधेये कालविशेषे असत्त्वप्रतीतेः, न हि शून्यवादी कालविशेषे शून्यत्वं ब्रवीति, शून्यवादनिरासमात्रेणैकविज्ञाने सर्वविज्ञानं च प्रतिज्ञातं नोपपादितं भवति। अपि तु वैशेषिकमतनिरासादेवोपपादितं भवति,

त्कार्यवादनिषेधश्च क्रियते [1]"कुतस्तु खलु सोम्यैवं स्या"दिति। प्रागसत उत्पत्तिरहेतुकेत्यर्थः। तदे-

कार्यस्य कारणस्य चासत्त्वं हि माध्यमिकाभिमतम्। इह तु 'कथमसतः सज्जायते'ति कारणासत्त्वं कार्यसत्त्वं च प्रतीयत इति न शून्यवादिनिरासपरमिदं वाक्यम्। अतः क्षणिकवादनिरासपरमिति भास्करेण व्याख्यातम्, तच्चानुपपन्नम्, कालविशेषे असत्त्वप्रतीतेः। न हि महाप्रलयसमये क्षणिकत्वमुच्यते क्षणिकत्ववादिभिः,तन्निरासेपि वैशेषिकमतनिरासः प्रतिज्ञातस्यार्थस्यापेक्षित एव, तन्निरासेन क्षणिकशून्यवादादिनिरासश्चार्थतः कृतः स्यात्, 'कथमसतः सज्जायेते'ति वाक्यं कारणसत्त्वपरं प्रतीयत इति क्षणिकवादनिरासानुगुणमिति चेत्—न, तस्याप्युपक्रमभूतकार्यासत्त्वपरपरमतोपन्यासवाक्यस्वारस्यानुगुणार्थत्वेन वर्णनीयत्वात्तस्य, एवमुपक्रमानुगुण्यमभिप्रेत्य 'असदेवेदमग्र आसी'दित्यारभ्येत्युक्तम्, एकविज्ञानेन सर्वविज्ञानस्यान्तरङ्गतयाऽपेक्षितो वैशेषिकमतनिरासः, एतन्निरासे शून्यवादादिनिरासोऽर्थसिद्धः। एवमुपक्रमवाक्यस्वारस्यानुगुण्यात् प्रतिज्ञातार्थोपपादनस्यान्तरङ्गत्वेनापेक्षितत्वाच्च वैशेषिकमतमेवात्र निरसनीयम्, कुतस्त्विति व्याख्येयोपादानम् अस्यार्थमाह (प्रागसत उत्पत्तिरहेतुकेत्यर्थ इति) हेतुशब्द आश्रये पर्यवस्यति, आश्रयस्यापि हेतुत्वात्, उत्पत्तिर्नाम सतो द्रव्यस्यावस्थान्तरयोग इति, वाचारम्भणमित्यादिवाक्येन ह्युपपादितमिति तदुपजीव्य कुतस्त्वित्यादिवाक्येनासत्कार्यवादो निरस्यते, उत्पत्तिर्नाम ह्यवस्थाविशेषः, तदाश्रयभूतं द्रव्यं पूर्वमसच्चेदुत्पत्त्याख्यावस्था निराश्रया कथं भवतीत्यर्थः। कुतः—आश्रयरूपाद्धेतोः,एवं स्यात्—उत्पत्यवस्था स्यादिति श्रुत्यक्षरार्थः। उत्तरवाक्यसङ्गतिमाह ( तदेवेति ) निराश्रयावस्थाङ्गीकारे बाधकं दर्शयतीत्यर्थः, 'कथमसत' इत्यादिवाक्यं व्याचष्टे

[1] छा० ६-२-२॥

वोपपादयति १"कथमसतस्सज्जायेते"ति, असत उत्पन्नमसदात्मकमेव भवतीत्यर्थः । यथा मृद उत्पन्नं घटादिकं मृदात्मकम्, सत उत्पत्तिर्नाम व्यवहारविशेषहेतुभूतोऽवस्थाविशेषयोगः ।

एतदुक्तं भवति—एकमेव कारणभूतं द्रव्यमवस्थान्तरयोगेन कार्यमित्युच्यत इति एकविज्ञानेन सर्वविज्ञानं प्रतिपिपादयिषितम्, तदसत्कार्यवादे न सेत्स्यति । तथा हि— निमित्तसमवाय्यसमवायिप्रभृतिभिः कारणैरवयव्याख्यं कार्यं द्रव्यान्तरमेवारभ्यत इति कारणभूताद्वस्तुनः कार्यस्य वस्त्वन्तरत्वात् तज्ज्ञानेनास्य ज्ञातता

(असत उत्पन्नमिति) असतः सज्जायेत—असतः कथं सज्जायेतेत्यर्थः । मृदेव घटो जायत इत्यर्थे सत्यपि मृत्तिकाया घटो जात इतिवदयं निर्देशः, कार्यकारणयोरनन्यत्वं प्रागुपपादितं मन्वानेनैवं निर्दिष्टम् । इह सच्छब्दो जगदवस्थाविशिष्टपरः, विशेष्यं वस्तु पूर्वमसच्चेद्विशेषणभूतजगत्त्वावस्थाया अप्यसत्त्वाद्विशिष्टमप्यसत्स्यादित्यर्थः, सच्चेत्कथमुत्पत्तिरुपपद्यत इत्यत्राह (सत इति)।

अत्र वैशेषिकमतनिरासः किमर्थं क्रियते, क्षणिकवादनिरास एवात्र स्यादिति शङ्कायां हेत्वन्तरमाह (एतदुक्तं भवतीति) असत्कार्यवादः कीदृशः, तस्मिन्सति प्रतिज्ञातार्थासिद्धिः कथमित्यत्राह (तथा हीति) दण्डचक्रादेरपि निमित्तत्वेऽपि निमित्तशब्दस्याधिष्ठातरि प्रसिद्धिप्राचुर्यात्तद्व्यतिरिक्तं कारणं प्रभृतिशब्देनोच्यते, (अवयव्याख्यमिति)

१. छां० ६-२-२ ॥

कथमपि न सम्भवतीति कथमवयवि[...] द्रव्यान्तर
निरस्यत इति चेत्– कारणगतावस्थान्तरयोगस्य
द्रव्यान्तरोत्पत्तिवादिनः सम्प्रतिपन्नस्यैवैकत्वना-
मान्तरव्यवहारान्तरादेरुपपादकत्वात् द्रव्यान्त-
रादर्शनाच्चेति कारणमेवावस्थान्तरापन्नं कार्य-
मित्युच्यत इत्युक्तम् ।

नतु निरधिष्ठानभ्रमासम्भवज्ञापनायासत्का-

---

अवयवा बहवोऽल्पपरिमाणाः, अवयव्येकं बृहत्परिमाणमित्येवं सङ्ख्याभेदपरिमाणभेदादयो द्रव्यान्तरत्वसाधका हेतवो विद्यन्ते अन्यस्य कार्यस्य कथमप्यवस्थातो द्रव्यतश्च ज्ञातता न सम्भव-त्यर्थः । द्रव्यभेदहेतवः कथं निरस्यन्त इति चोदयति ( कथमिति ) परिहरति ( कारणेति ) ( संप्रतिपन्नस्यैवेति ) असमवायिकारणत्वं सम्प्रतिपन्नस्येत्यर्थः । द्रव्यान्तराभ्युपगतिः किं दर्शनादुत कल्पकं न तावद्दर्शनम्, कल्पका बुद्धिशब्दकार्यान्तरादयोऽवस्थाविशेषेणान्यथा-सिद्धाः । 'आस्ते शेते गच्छति तिष्ठत्येकोऽयं समाज' इत्यादि बुद्धिशब्दान्तरादेरवस्थाविशेषहेतुकत्वदर्शनात्, घटपटादिषु द्रव्यभे-दहेतुकत्वं च दृष्टम् । 'आस्ते शेते' इत्यादिष्ववस्थाभेदहेतुकत्वं दृष्टमित्यत्र किं नियामकमिति चेत्–'आस्ते शेते' इत्यादिषु द्रव्यप्रत्यभिज्ञया अवस्थाभेदहेतुकत्वं ज्ञायते, एवं मृद्घटादिषु द्रव्यप्रत्यभिज्ञया अवस्थाभेदहेतुकत्वं बुद्धिशब्दान्तरादेर्ज्ञायत इत्यर्थः कथं निरस्यत इति शङ्कायां द्रव्यान्तरादर्शनाच्च निरस्यत इत्यन्वयः ( इति कारणमेवेति ) इति–तस्मादित्यर्थः, एवं नात्र क्षणिकमत-निरासः क्रियते, अपि तु वैशेषिकमतनिरास इत्युक्तम् ।

अथ माध्यमिकमतनिरासपरत्वमाशङ्क्य निराक्रियते ( नन्विति

र्यवादनिरासः क्रियते । तथा हि– एकं चिद्रूपं सत्यमेवाविद्याच्छादितं जगद्रूपेण विवर्तत इति, अविद्याश्रयत्वाय मूलकारणं सत्यमित्यभ्युपगन्तव्यमित्यसत्कार्यवादनिरासः । नैतदेवम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादृष्टान्तमुखेन सत्कार्यवादस्यैव प्रसक्तत्वादित्युक्तम्, भवत्पक्षे निरधिष्ठानभ्रमासंभवस्य दुरुपपादत्वाच्च । यस्य हि चेत-

---

दिना) (निरधिष्ठानेति) स्पष्टम् । कथं निरधिष्ठानभ्रमासम्भवः, अधिष्ठानं च किम्? तस्य पारमार्थ्ये कथं भ्रमसम्भवः? इत्यत्राह (तथा हीति) एकशब्देन सजातीयादिभेदनिषेधः, सत्यमेवेत्येवकारेणाधिष्ठानापारमार्थ्यव्यावृत्तिः । अधिष्ठानापारमार्थ्ये तस्याप्यपरमार्थत्वादधिष्ठानान्तरापेक्षेत्यनवस्था स्यात्, तस्मात् सत्यमधिष्ठानमित्यभिप्रायः, परिहरति (नैतदित्यादिना) प्रसक्तत्वादसत्कार्यवादनिरासः क्रियत इत्युक्तमित्यन्वयः । प्रतिज्ञादृष्टान्ताभ्यां सत्कार्यवादस्य प्रस्तुतत्वात्तदुपयोगित्वेनासत्कार्यवादनिरासः क्रियते, न तु निरधिष्ठानभ्रमासम्भवज्ञापनायासत्कार्यवादनिरासः क्रियत इत्यर्थः । हेत्वन्तरं चाह (भवत्पक्ष इति) तदेवोपपादयति (यस्य हीति) यस्य मते इत्यर्थः । (दोषाश्रयत्वं च) दोषसम्बन्धश्चेत्यर्थः । तस्य– तस्य मते इत्यर्थः । अधिष्ठानापारमार्थ्ये भ्रमासम्भवः किं दर्शनादुच्यते उत युक्तिभिस्तथा कल्प्यते? । दर्शनाच्चेत् दोषदोषाश्रयत्वादेरप्यपारमार्थिकत्वेऽपि न क्वचिद्भ्रमो दृष्ट इति दोषादेरपि पारमार्थ्यमभ्युपगन्तव्यं स्यात्, युक्त्या पारमार्थ्यं कल्प्यते चेत् तर्हि दोषस्यापारमार्थ्ये दोषान्तरापेक्षित्वेनानवस्थाप्रसङ्गात्तस्यापि पारमार्थ्यं स्यात् । तत्रानवस्थादोषपरिहाराय स्वरूपानादित्वं प्रवाहानादित्वं दुर्घटत्वं स्वपरनिर्वाहकत्वं वा यदुच्यते,

नगतदोषः पारमार्थिकः, दोषाश्रयत्वं च पारमार्थिकं, तस्य पारमार्थिकदोषेण युक्तस्यापारमार्थिकगन्धर्वनगरादिदर्शनमुपपन्नम्। यस्य तु दोषश्चापारमार्थिकः, दोषाश्रयत्वं चापारमार्थिकम्, तस्यापारमार्थिकेनाप्याश्रयेण तदुपपन्नमिति भवत्पक्षे न निरधिष्ठानभ्रमासम्भवः ।

शोधकवाक्येष्वपि [1]"सत्यं ज्ञानमनन्तं ब्रह्म" [2]"आनन्दो ब्रह्मे"त्यादिषु सामानाधिकरण्यव्युत्पत्तिसिद्धानेकगुणविशिष्टैकार्थाभिधानमविरुद्धमिति सर्वगुणविशिष्टं ब्रह्माभिधीयते इति पूर्वमेवोक्तम्। [3]"अथात आदेशो नेति नेती"ति बहुधा निषेधो दृश्यत इति चेत्—किमत्र निषिध्यत इति वक्तव्यम्।

तदधिष्ठानेऽपि तुल्यमिति न तत्पारमार्थ्यसिद्धिः, अनादित्वेऽप्यनवस्था दुष्परिहरा । अनादेरेव जीवभेदस्यापरमार्थस्य दोषमूलत्वाभ्युपगमात्। एवं भवत्पक्षे निरधिष्ठानभ्रमासम्भवस्य दुरुपपादत्वात्, तज्ज्ञापनायासत्कार्यवादनिरासोऽनुपपन्न इत्यर्थः ।

यानि श्रुतिवाक्यानि निर्विशेषपरत्वेन परैरुक्तानि, तेषां सर्वेषां भेदनिषेधपरत्वमपि निरसनीयम्, अतः सद्विद्यानन्तरं शोधकवाक्यानां भेदनिषेधपरत्वं व्युदस्यते ( शोधकवाक्येष्वपि ) इत्यादिना, स्पष्टम्, सद्विद्यादिषु भेदनिषेधपरत्वमास्तेष्य-मिति निषेधकण्ठोक्तिमद्वाक्यमथात आदेश इत्यादिकम्, भेदनिषेधपरत्वं शङ्कते ( अथात इत्यादिना ) ( किमत्रेति ) किंशब्द आक्षे-

१. तै० आ० २-११॥ २. तै० भृ० ६ ॥ ३. बृ० ४-३-६ ॥

"द्वे वाव ब्रह्मणो रूपे, मूर्त्तं चामूर्तमेव च"इति मूर्तामूर्तात्मकः प्रपञ्चः सर्वोऽपि निषिध्यत इति चेत् ब्रह्मणो रूपतया अप्रज्ञातं सर्वं रूपतयोपदिश्य पुनस्तदेव निषेद्धुमयुक्तम्, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर'मिति न्यायात्। कस्तर्हि निषेधवाक्यार्थः? सूत्रकारः स्वयमेव वदति [२]"प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय" इति, उत्तरत्र [३]"अथ नामधेयं सत्यस्य-

पार्थः प्रमाणान्तरागोचरस्य विहितस्य निषेधायोगान्न किञ्चिदपि निषेद्धुं शक्यमिति भावः। निषेध्यं शङ्कते (द्वे वावेति) पूर्वाभिप्रेतमर्थं वदन् परिहरति (ब्रह्मण इति) ब्रह्मणो रूपत्वेनाप्रज्ञातत्वान्निषेधार्थमनुवाद इति वक्तुं न शक्यते, तस्माद्विधीयत एवेति विहितस्य निषेधो नोपपद्यते, तथा सति वेदस्य विप्रलम्भकत्वेन निषेधवाक्यमप्यप्रमाणं भवेदित्यर्थः। एतदनुगुणन्यायप्रतिपादकं पुराणवचनमाह (प्रक्षालनाद्धीति) यथा पङ्कोपलेपतत्क्षालनादपि तदस्पर्शो वरं, तथा अपूर्वप्रमान्तरारोपणा[*]तन्निषेधादवेदनमेव वरम्, न हि पङ्कोपलेपतत्क्षालनायासस्य प्रयोजनं विद्यते। एवमपूर्वप्रमारोपणातन्निषेधायासस्याप्रयोजनत्वाच्छास्त्रस्य प्रयोजनपर्यवसायित्वं न स्यादिति बुभुत्सितग्राह्यं शास्त्रमनारम्भणीयं स्यादिति भावः।

एवं स्वोक्तार्थे निरस्ते राद्धान्तिनं पृच्छति (क इति) निषेधवाक्यार्थः—निषेधवाक्यस्यार्थः। आह सिद्धान्ती (सूत्रकार इति) उदाहृतं सूत्रं व्याचष्टे (उत्तरत्रेत्यादिना) उत्तरत्रशब्देन सौत्रं

१. बृ० ४-३-१॥ २. ब्र० सू० ३-२-२२॥ ३. बृ० ४-३-६॥
[*] तन्निषेधादपि मौनमेव इति पा०॥

सत्यमिति प्राणा वै सत्यं तेषामेष "सत्य"मित्यादिना गुणगणस्य प्रतिपादितत्वात् पूर्वप्रकृतैतावन्मात्रं न भवति ब्रह्मेति ब्रह्मणस्तावन्मात्रता प्रतिषिध्यत इति सूत्रार्थः। [1]"नेह नानास्ति किञ्चने"त्यादिना नानात्वप्रतिषेध एव दृश्यत इति चेत्- अत्राप्युत्तरत्र [2]"सर्वस्य वशी सर्वस्येशानः" इति सत्यसङ्कल्पत्व- सर्वेश्वरत्वप्रतिपाद-

त्त इति पदं व्याख्यातम्, भूयो-बहुतरमित्यर्थः। तदभिप्रेतं (गुणगणस्येति) स्वरूपान्यथाभावरूपविकारास्पदाचिद्रूपवृ सत्यशब्दवाच्यो जीवः, तस्य धर्मान्यथाभावरूपविकारोऽस्ति, स्वरूपतो धर्मतश्चाविकारः परमात्मेति तदुभयव्यावृत्त्या परमात्मा सत्यस्य सत्य'मित्युच्यत इत्यर्थः। (एतावन्मात्रं न भवति ब्रह्मेति- इति गुणविशिष्टं ब्रह्मैतावन्न भवति, एतावद्गुणकं ब्रह्म न भवतीत्यर्थः नेह नानास्तीत्यादिविषयत्वानिषेधपरत्वं दुर्वचमिति कृत्स्नं निषेधपरत्वं शङ्कते (नेहेत्यादिना) परिहरति (अत्रापीति वशित्वं गुणेन वशीकारः, ईशानः नियन्ता, वशित्वादीनां सत्यसङ्कल्पत्वविशेषरूपत्वात्सत्यसङ्कल्पत्वमत्रोक्तम्, 'सर्वस्याधिपतिरिति वाक्योक्तं स्वामित्वं सर्वेश्वरत्वशब्देनोच्यते, अस्य प्रदर्शनार्थत्वात्प्रकरणोक्तं 'सर्वमिदं प्रशास्ति' इत्युक्तं नियमनं 'एष सेतुर्विधरण' इत्युक्तं धारकत्वं चोक्तं भवति। एवं पतित्व- नियन्तृत्व धारकत्वैरीश्वरस्य तं प्रति शेषनियाम्यधार्यभूतस्य जगतः शरीरत्वाचेतनाचेतनवस्तुशरीर इत्युक्तम्, सर्वप्रकारसंस्थितः-सर्वप्रकारविशिष्टः एवं प्रकारैकत्वस्य विहितत्वान्निषेधस्य विहितव्यतिरिक्तविषयकत्वा

१. बृ० ६-४-१९॥ २. बृ० ६-४-२२॥

त्राचेतनाचेतद्वस्तुशरीर ईश्वर इति सर्वप्रकारसंस्थितः सर्वेश्वरः स एक एवेति तत्प्रत्यनीकाब्रह्मात्मकनानात्वं प्रतिषिद्धम्, न भवदभिमतम् । सर्वास्वेवंप्रकारासु श्रुतिष्वियमेव स्थितिरिति न क्वचिदपि ब्रह्मणः सविशेषत्वनिषेधवाची कोऽपि शब्दो दृश्यते ।

अपि च निर्विशेषज्ञानमात्रं ब्रह्म, तच्च आच्छादिकाविद्यातिरोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्ययमर्थो न घटते, तिरोधानं नाम प्रकाशनिवारणम्, स्वरूपातिरेकिप्रकाशधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वात्स्वरूपनाश एव स्यात्,

प्रकारिनानात्वनिषेधपरमिदं वाक्यमित्यर्थः । (न भवदभिमतमिति) सजातीयविजातीयस्वगतरूपकृत्स्ननानात्वं न प्रतिषिध्यत इत्यर्थः । उक्तन्यायकलापेन सर्वाः श्रुतयो निर्वाह्या इत्याह (सर्वास्विति) (निषेधवाची कोऽपि शब्दो दृश्यत इति) के ते शब्दा इति हि प्रक्रान्तम्, अतस्तदेवोपसंहृतम् ।

एवं ब्रह्माज्ञानपक्षस्य श्रुत्यपेतत्वं दर्शितम् । अथ न्यायापेतत्वं दर्शयति (अपि चेत्यादिना) श्रुतिन्यायापेतमिति हि पूर्वमुक्तम् । (अपि चेति) न श्रुत्यपेतत्वमेव, अपि तु न्यायापेतत्वं चेत्यर्थः । तिरोहितस्वरूपस्य हि भेददर्शनम् तत्र तिरोधानदूषणेनैव परमतं समूलमुन्मूलितं भवतीति तिरोधिं दुदूषयिषुस्तन्मतमुपन्यस्य तदनुपपत्तिं प्रतिजानीते (निर्विशेषेत्यादिना) कथमित्यत्राह तिरोधानं नामेति, प्रकाशनिवृत्तिस्तिरोधानमस्तु ततः किमित्यत्राह (स्वरूपेति) 'नित्यं

प्रकाशपर्यायं ज्ञानं नित्यम्, स च प्रकाशोऽविद्या तिरोहित इति बालिशभाषितमिदम्, अविद्यया प्रकाशस्तिरोहित इति प्रकाशोत्पत्तिप्रतिबन्धो वा विद्यमानस्य विनाशो वा, प्रकाशस्यानुत्पाद्यत्वाद्विनाश एव स्यात्, प्रकाशो नित्यो निर्विकारस्तिष्ठतीति चेत् सत्यामप्यविद्यायां ब्रह्मणि न किञ्चित्तिरोहितमिति नानात्वं पश्यतीति

विभु'मित्यादिश्रुतयो नित्यत्वं वदन्ति, 'अनृतेन हि प्रत्यूढा' इत्यादयस्तिरोधानं वदन्ति, एवं नित्यत्वतिरोधानयोरपि श्रुतिप्रतिपन्नत्वान्नानित्यत्वमिति शङ्कायां श्रुतिरप्ययोग्यार्थं वक्तुं नालमित्यभिप्रायेणाह (प्रकाशपर्यायमिति) वाद्यन्तरैरिव ज्ञानस्य जडत्वमङ्गीकृतं चेत् प्रकाशस्य तद्व्यतिरिक्तत्वात् तन्निवृत्तिः स्वरूपनाशो न स्यात्, न च तथाऽभ्युपगतम्, ब्रह्म ज्ञानस्वरूपम् ज्ञानं च स्वयंप्रकाशमित्येवाभ्युपगतमित्यभिप्रायेण प्रकाशपर्यायमित्युक्तम्, तिरोधानं प्रकाशनिवृत्तिः, तस्मात्स्वयम्प्रकाशरूपं ज्ञानं नित्यम्, तच्चाविद्यातिरोहितमिति व्याहतमितीममर्थं श्रुतिर्न प्रतिपादयतीत्यर्थः । एवं स्वयंप्रकाशत्वश्रुतिं तिरोधानश्रुतिमुभयं श्रद्दधानेन त्वया व्याहतार्थ उक्तः स्यादित्युक्तम् । उक्तार्थं च विवृण्वन् अन्यतरपरिग्रहे अन्यतरत् त्याज्यमित्याह (अविद्ययेति) (अविद्यया प्रकाशस्तिरोहित इति) अस्यार्थः प्रकाशस्य प्रागभावः प्रध्वंसाभावो वा इत्यर्थः । तत्रानुत्पाद्यस्य प्रकाशस्य प्रध्वंसाभाव एव तिरोधिः स्यादित्याह (प्रकाशस्येति) एवं तिरोधानश्रुतिं श्रद्दधानेन त्वया स्वयंप्रकाशत्वश्रुतिस्त्याज्या स्यात् स्वरूपनाशप्रसङ्गादित्युक्तम् । अथ स्वप्रकाशत्वाभ्युपगमे तिरोधानश्रुतिस्त्याज्या स्यादित्याह (प्रकाशो नित्य इति) (सत्यनिर्वचनं

भवतामयं व्यवहारः सत्कर्वनिवर्चनीय एव ॥

ननु च भवतोऽपि विज्ञानस्वरूप आत्माऽभ्युपगन्तव्यः, स च स्वयम्प्रकाशः तस्य च देवादिस्वरूपात्माभिमाने स्वरूपप्रकाशतिरोधानमवश्याश्रयणीयम्, स्वरूपप्रकाशे सति स्वात्मन्याकारान्तराध्यासायोगात्; अतो भवतश्चायं समानो दोषः। किञ्चास्माकमेकस्मिन्नेवात्मनि

---

एवेति ) व्याहतत्वादयमर्थो विद्वत्सन्निधौ वक्तुमयोग्य इत्युपालम्भः ।

उक्तदोषः सिद्धान्तिनोऽपि प्रसजतीति चोदयति ( ननु चेत्यादिना ) ( भवतोऽपीति ) 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानघन एव प्रज्ञानघन एव' इत्यादिभिर्ज्ञानस्वरूपत्वं त्वयाऽभ्युपगन्तव्यम्, ( स चेति ) 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' 'आत्मज्योतिः सम्राडिति होवाचे'त्यादिभिः स्वयम्प्रकाशत्वमभ्युपेत्यम्, ( तस्येति ) 'तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसञ्ज्ञिता' इत्यादिभिस्तिरोधानमभ्युपेत्यं देवत्वाद्यध्याससिद्ध्यर्थमित्यर्थः । स्वपक्षे दोषाधिक्यमस्तीत्याह ( किञ्चेति ) प्रयोजकं तुल्यं चेत्कथं दोषाधिक्यमिति चेत्, उच्यते— भेदवादिना सुखित्वदुःखित्वशिष्याचार्यबद्धमुक्तादिव्यवस्थाः प्रामाणिकत्वेनाभ्युपेताः, तिरोधानेन सर्वात्मनां स्वरूपनाशे सति प्रामाणिकानेकव्यवस्थाभङ्गः स्यात्, असत्पक्षे तु व्यवस्थानां काल्पनिकत्वान्न तद्भङ्गो दोषः । स्वत्पक्षे तु स्वरूपनाशप्रसङ्गात्प्रामाणिकत्वेनाभ्युपगतानेकव्यवस्थाभङ्गप्रसङ्गाच्च दोषाधिक्यमिति भावः। परिहरणीयः—इत्यस्यायमभिप्रायः—सर्वत्र हि प्रतिबन्दीप्रयोगः परिहारसाम्याभिप्रायेण, अन्यथा प्रतिबन्दी निष्प्रयोजना, न हि त्वं चोर इत्यत्र त्वमपि चोर इत्युक्ते दोषपरिहारः स्यात् । तस्मात्परिहारतुल्य-

भवदुदीरितं दुर्घटत्वम्, भवतामात्मानन्त्याभ्युपग
मात्सर्वेष्वयं दोषः परिहरणीयः।

अत्रोच्यते– स्वभावतो मलप्रत्यनीकानन्त

त्वमेव प्रतिवन्दीं वदतोऽभिप्रेतमिति अत्रापि यस्त्वया परिहार उच्
सोऽस्मत्पक्षेऽपि समान इति।

परिहरति ( अत्रोच्यते इत्यादिना. ) प्रतिवन्दीं वदता पू
पक्षिणाऽयमर्थोऽभिप्रेतः, 'न हि वचनविरोधे न्यायः प्रवर्तते' इ
न्यायाज्जीवस्वरूपनित्यत्वे तस्य च तिरोधाने शास्त्रसिद्धे त
तद्विरुद्धस्तर्को न प्रवर्तत इति परिहारं वदसि चेत्सोऽस्मत्पक्षे
तुल्य इति, एतत्प्रतिचक्ति ( स्वभावत इति ) वचनविरोधे के
तर्को यद्यपि न प्रवर्त्तते, तथाऽपि वचनान्तरविरोधो दुर्व
ब्रह्मणो "हेयप्रत्यनीकत्वकल्याणगुणाकरत्ववचनैर्जगतस्तद्भिन्नं
त्वविधायिवचनैश्च ब्रह्मणो भ्रमाश्रयत्वादिकं जगतो भ्रमविषयत्वं
विरुद्धमिति ब्रह्मणस्तिरोधानादिकं वचनं न प्रतिपादयितुमलम्
एवं वचनविरोधेन 'भवदभिमतार्थस्य व्याहतस्य श्रुत्या प्रतिपा
यितुमशक्यत्वात् असदुक्तस्तर्कस्त्वन्मते प्रवर्त्तत एवेति। अस्मन्म
तु जीवस्वरूपतिरोधानादेर्वचनान्तरविरोधाभावाज्जीवस्वरूपतिरोधाना
दिकं वचनं प्रतिपादयत्येवेति तद्विरोधे न तर्कः प्रवर्तत इति न प
हारसाम्यमित्यभिप्रायेण स्वभावत इत्यादिकमुच्यते, न केवलं म
राहित्यम्, अपि तु मलविरोधीत्यभिप्रायेण मलप्रत्यनीकेत्युक्तम्
पञ्चगव्यादिव्यावृत्त्यर्थं स्वभावत इत्युक्तम्। अनन्तम्– अपरिच्छिन्न
स्वरूपं—धर्मिस्वरूपम्., प्रदेशभेदेन जडत्वाननुकूलत्वशङ्काव्या
वृत्त्यर्थ एकशब्दः। स्वाभाविकशब्देन 'स्वाभाविकी ज्ञानबलक्रि
चे'ति श्रुतिरभिप्रेता, सावधिकातिशयव्यावृत्त्यर्थमनवधिकातिश
शब्दः। अपरिमितः– असङ्ख्येयः उदारगुणसागरो बहु

ज्ञानानन्दैकस्वरूपं स्वाभाविकानवधिकातिशयापरिमितोदारगुणसागरं निमेषकाष्ठाकलामुहूर्तादिपरार्द्धपर्यन्तापरिमितव्यवच्छेदस्वरूपसर्वोत्पत्तिस्थितिविनाशादिसर्वपरिणामनिमित्तभूतकालकृ-

---

बहुव्रीहिः । एवमुभयलिङ्गत्ववचनविरोधो दर्शितः । अनेन प्रमाश्रयत्वं दुर्वचमित्युक्तं भवति । अथ विभूतेर्भ्रमविषयत्वानुपपत्तिरुच्यते, तत्र नित्यविभूतिमत्त्वमुच्यते (निमेषेत्यादिना) (अपरिमितव्यवच्छेदस्वरूपेति) निमेषकाष्ठाद्यवच्छेदाः कालस्यासाधारणधर्मा इत्यर्थः । अन्यथा व्यवच्छेदवदिति हि वक्तव्यम्, न तु व्यवच्छेदस्वरूपेति, कालो हि स्वयं परिणामी प्रकृतेः परिणामहेतुः, निमेषादयः कालपरिणामविशेषाः 'सर्वे निमेषा जज्ञिरे' इति श्रुतेः, एवं परिणामित्वमुक्तम् । अथ प्रकृतिपरिणामहेतुत्वमुच्यते (सर्वोत्पत्तीति) आदिशब्देन जायमानाद्यवस्थात्रयं विवक्षितम्, सर्वशब्देन विशदाविशदपरिणामाश्च विवक्षिताः । निमित्तशब्देनोपादानत्वाधिष्ठातृत्वव्यावृत्तिः, यथा ब्रह्मण उपादानत्वं प्रकृतिद्वारकम्, तथा ब्रह्मण एवोपकरणत्वमपि कालद्वारकमित्यभिप्रायः । एवं 'सर्गस्थितिविनाशानां जगतो यो जगन्मयः । मूलभूतो नमस्तस्मै' इति वचनस्य 'कलामुहूर्तादिमयश्च कालः' इत्यस्य चार्थो विवक्षितः । जगन्मयः—आदित्यचन्द्राद्यवच्छेद्यतया सर्गाद्यवच्छेदकतया च जगत्प्रचुर इत्यर्थः। एवंविधकालपरिणाम्या नित्यविभूतिरित्यत्राह (कालकृतपरिणामास्पृष्टेति) 'कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः' इत्यस्याऽर्थोऽभिप्रेतः, अनन्तत्वेऽभिहितेऽपि महच्छब्देन विशेषणं लीलाविभूत्यपेक्षया महत्त्वाभिप्रायम्, आनन्त्यं हि विभूतिद्वयसाधारणम्, भोगोपकरणाद्यानन्त्यपरो वा महे-

तपरिणामास्पृष्टानन्तमहाविभूति— स्वलीला-परिकरस्वांशभूतानन्तबद्धमुक्तनानाविधचेतनत-द्भोग्यभूतानन्तविचित्रपरिणामशक्तिचेतनेतरव-स्तुजातान्तर्यामित्वकृतसर्वशरीरत्वसर्वप्रकाराव-स्थानावस्थितं परं ब्रह्म च वेद्यम्, तत्साक्षात्कारक्ष-

---

च्छब्दः । अस्पृष्टानन्तमहाविभूतीति ब्रह्मविशेषणम्, 'महाविभूतिसंस्थानम्' 'शुद्धे महाविभूत्याख्ये' इति वचने महाविभूतिशब्दः स्मारिते । अथ लीलाविभूतिमत्त्वमुच्यते ( स्वलीलेत्यादिना ) मुक्त-लीलापरिकरत्वं मोचनलीलोपकरणत्वात् । स्वांशभूतशब्दे विशेषणतयांऽशत्वं विवक्षितम्, मुक्तेषु नानाविधत्वं 'स एकधा भवती'त्यादिश्रुत्युक्तं भगवल्लीलान्तर्गतस्वसङ्कल्पगृहीतदेहवैविध्य-रूपम्, चेतनेतरशब्देनाचेतनशब्दार्थो व्याख्यातः । वस्तुजातश-ब्देन प्रधानाव्यक्तकाला विवक्षिताः, पूर्वं कालकीर्तनं नित्यविभूतेस्त-दधीन्यव्यावृत्त्यै, एवंविधस्य वस्तुजातस्यान्तर्यामित्वेन कृतं सर्वशरी-रत्वसर्वप्रकारावस्थानम्, सर्वशरीरतया सर्वप्रकारत्वेनावस्थानमन्तर्या-मित्वकृतम्, तेनावस्थानेनावस्थितं—विशिष्टमित्यर्थः । एवं शरीरशरी-रिभावकथनेन 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरू-पेण भ्रान्तिदर्शनतः स्थित'मित्यादिवाक्योक्तं भ्रान्तिदर्शनं ब्रह्मणः श-रीरभूतजीवद्वारकमित्युक्तं भवति । शरीरवाचिशब्दानां शरीरिप-र्यन्तत्वे हेतुर्विवक्षितः सर्वप्रकारशब्देन । एवं जगतो भगवद्विभूति-त्वविधायिवाक्यैर्विरोधाज्जगतो भ्रमविषयत्वमयुक्तमित्युक्तं भवति, एवं-विधं परं ब्रह्म वेद्यमभ्युपगच्छतामित्यन्वयः । स्वाभिमतार्थवादि-वचनस्य तत्प्राभाण्यस्य च मिथ्यात्वं वदता त्वया 'न हि वचनविरो-न्यायः प्रवर्तते' इति परिहारो दुर्वचः । वचनस्य तत्प्रामाण्यस्य

मभगवद्द्वैपायन–पराशर–वाल्मीकि–मनु–याज्ञवल्क्य–गौतमापस्तम्बप्रभृतिमुनिगणप्रणीतविध्यर्थवादमन्त्ररूपवेदमूलेतिहासपुराणधर्म्मशास्त्रोपबृंहित–परमार्थभूतानादिनिधनाविच्छिन्नपाठसम्प्रदायऋग्यजुस्सामाथर्वरूपानन्तशाखं वेदं चाभ्युपगच्छतामस्माकं किं न सेत्स्यति ।

मिथ्यात्वादित्यभिप्रायेण प्रमाणस्वरूपं दर्शयति ( तत्साक्षादित्यादिना ) तत्साक्षात्कारक्षमशब्देन भगवद्द्वैपायनादिपरमर्षिगणपरिगणनेन च 'इतरेषां चानुपलब्धे'रित्युक्तस्मृत्यधिकरणस्यार्थोऽभिप्रेतः । तत्र कपिलस्य वेददर्शन–योगिप्रत्यक्षाख्यपरिकरद्वयसम्भवादाप्तिः पूर्वपक्षिता । सिद्धान्ते तु परिकरद्वयं तुल्यम्, वक्तृबहुत्वमधिकहेतुरिति ह्युक्तम्, तदत्र स्मारितम् । तद्वाक्यानां प्रामाण्यं कथमित्यत्राह ( विध्यर्थवादेति ) विधिमूलं धर्म्मशास्त्रं, मन्त्रार्थवादमूलमितिहासपुराणमित्यर्थः । धर्म्मशास्त्रेतिहासपुराणेषु सर्वेष्वपि विध्यर्थवादमन्त्रार्थेषु सत्स्वपि प्राचुर्य्यादेवमुक्तम् । अनधीतशाखार्थैः सहाधीतशाखार्थविशदीकरणमुपबृंहणम्, परमार्थभूतशब्देन परपक्षे वचनविरोधे तर्काप्रवृत्तिरूपपरिहारो दुर्वचः, वचनतत्प्रामाण्यादेरपारमार्थ्यादिति सूचितम् । अनादिनिधनादिशब्दैः वेदप्रामाण्यं विवक्षितम्, किमर्थमुपबृंहणापेक्षा 'अनन्ता वै वेदा' इति वेदानामानन्त्यादिति चेत्–न, ऋग्यजुःसामाथर्वाख्यानां वेदानां चतुःसङ्ख्यासङ्ख्यातत्वेनानन्त्याभावादिति चेत् तत्राह ( ऋग्यजुःसामाथर्वरूपानन्तशाखमिति ) यथा देवमनुष्यादिचतुष्कोटिनिविष्टाः प्राणिनोऽसंख्येयाः, एवमृग्यजुस्सामादिचतुष्कोटिनिविष्टा अपि वेदाः शाखाभेदेनानन्ता इत्यर्थः । ( वेदं चाभ्युपगच्छतामिति ) प्रमाणं प्रमेयं च परमार्थत्वेनाभ्युपग-

यथोक्तं भगवता द्वैपायनेन महाभारते—"यो मामजमनादिं च वेत्ति लोकमहेश्वरम्" "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥" "कालं स पचते तत्र न कालस्तत्र वै प्रभुः । एते वै निरयास्तात स्थानस्य परमात्मनः ॥ अव्यक्तादिविशेषान्तं परिणामर्द्धिसंयुतम् । क्रीडा हरेरिदं सर्वं क्षरमित्यवधार्यताम् ॥" "कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः ॥ कृष्णस्य हि कृते भूतमिदं विश्वं चराचरमिति ॥ कृष्णस्य हि कृते इति

---

च्वतामित्यर्थः ।

उक्तार्थेषु ऋषिवचनानि परिगणनक्रमेणोपादत्ते ( यथोक्तमित्यादिना ) ( यो मामिति ) अजमिति अचेतनबद्धव्यावृत्तिः । अनादिमजमिति मुक्तव्यावृत्तिः, लोकमहेश्वरमिति नित्यसिद्धव्यावृत्तिः लोक्यत इति व्युत्पत्त्या, एवं विजानतो मुक्तिरुक्ता 'असम्मूढः स मर्त्येष्वि'त्यादिना, तदप्यत्राभिप्रेतम् । चिदचिद्वैलक्षण्यमाह ( द्वाविमाविति ) अत्र व्यापनभरणस्वाम्यादयः प्रतिपन्नाः । तत्रैव नित्यविभूतिमत्त्वे प्रमाणमाह ( कालमिति ) लीलाविभूतिमत्त्वे वचनमाह ( अव्यक्तादीति ) तदायत्तोत्पत्त्यादिकत्वे तच्छेषत्वे च प्रमाणमाह ( कृष्ण एवेति ) व्याख्येयं पदं व्याचष्टे ( कृष्णस्येति

कृष्णस्य शेषभूतं सर्वमित्यर्थः।

भगवता पराशरेणाप्युक्तम्— [1]"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते। मैत्रेय भगवच्छब्दः सर्वकारणकारणे॥ ज्ञानशक्तिबलैश्वर्य्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥ एवमेष महाशब्दो मैत्रेय! भगवानिति। परमब्रह्मभूतस्य वासुदेवस्य नान्यगः॥ तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः। शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः"॥ [2]"एवम्प्रकारममलं सत्यं व्यापकमव्ययम्। समस्तहेयरहितं विष्णवाख्यं परमं पदम्"॥ [3]"कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः"। [4]"क्रीडतो बालकस्येव चेष्टास्तस्य निशामय" इत्यादि। मनुनाऽपि [5]"प्रशासितारं सर्वेषामणीयां

उक्तमर्थं विशदीकर्त्तुमनुक्तं च दर्शयितुमाह (भगवता पराशरेणेति) सर्वशब्दानां वस्तुमात्रमुपलक्ष्यमिति न मुख्यार्थो ब्रह्मेतिवादश्चात्र परिहृतो भवति। भगवच्छब्दनिर्वचनात् 'महाविभूत्याख्ये सर्वकारणकारणे' इत्युभयविभूतिमत्त्वं सिद्धम्, (शुद्धे इति) (ज्ञानशक्तीति) 'विना हेयै'रित्यादिभिरुभयलिङ्गत्वं ब्रह्मणस्सिद्धम्, नित्यविभूतेरकालकाल्यत्वे वचनमाह, (कलेति) (मनुनापीति) प्रशा-

१. वि० ६-५ श्लो० ७२-७६-७५॥ २. वि० १-२२-५३॥
३. वि० ४-१-८४॥ ४. वि० १-२-१८॥ ५. म० १२-१२२॥

सम्रणीयसाम्" इत्यादिनोक्तम् । याज्ञवल्क्येनापि "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता" इति आपस्तम्बेनापि "पूः प्राणिनः सर्व एव गुहाशयस्य" इति । सर्वे प्राणिनः गुहाशयस्य परमात्मनः पूः— पुरं शरीरमित्यर्थः । प्राणिन इति जीवात्मक भूतसंघाताः ।

ननु च किमनेनाडम्बरेण ? चोद्यं तु न परिहृतम् । उच्यते, एवमभ्युपगच्छतामस्माकमात्मधर्मभूतस्य चैतन्यस्य स्वाभाविकस्यापि कर्म

---

सितृत्वादिगुणा उक्ता इत्यभिप्रायः । ( याज्ञवल्क्येनापीति ) मित्यन्वयः । ( ईश्वरज्ञानात् ) न तु निर्विशेषज्ञानादिति भावः । आपस्तम्बवचनं व्याचष्टे ( सर्व इत्यादिना ) 'अङ्गं वपुर्वपुः पुरं शरीरमिति हि नैघण्टुकाः । एवमुभयलिङ्गत्वोभयविभूतिमत्त्वप्रतिपादकवचनैर्विरोधात्, वचनं ब्रह्मणस्तिरोधानादिकं न प्रतिपादयति हेतोश्च, वचनतत्प्रामाण्यादेर्मिथ्यात्वाभ्युपगमाच्च, 'न हि वचनविरोधे न्यायः प्रवर्तते' इति परिहारस्त्वत्पक्षे वक्तुमशक्यः । अस्मत्पक्षे जीवस्वरूपतिरोधानादेर्वचनान्तरविरोधाभावात् तत् वाक्यं प्रतिपादयतीत्यनेन वचनतत्प्रामाण्यादेर्मिथ्यात्वाभावात्, न हि वचनविरोधे न्यायः प्रवर्तते' इति परिहारः सुवच एवेत्यभिप्रायः ।

एवमभिप्रेतस्य परिहारस्यास्फुटत्वात्तमजानन् उपपत्त्यैव परिहारं अपेक्षमाणः पूर्वपक्षी सोपालम्भं चोदयति ( ननु चेति ) परिहरति ( उच्यत इत्यादिना ) न केवलं वचनविरोधादेव परिहारः, केवलतर्केणापि परिहारो विद्यत एवेत्यभिप्रायेणाह ( एवमिति ) एवमभ्युपगच्छतां— तत्तत्प्रमाणं तत्तत्प्रमेयं च पारमार्थिकत्वेनाभ्युपगच्छतां

पारमार्थिकं सङ्कोचं विकासं च ब्रुवतां सर्वमिदं परिहृतम् । भवतस्तु प्रकाश एव स्वरूपमिति प्रकाशो न धर्मभूतः, तस्य सङ्कोचो विकासो वा नाभ्युपगम्यते । प्रकाशप्रसरानुत्पत्तिमेव तिरो-

तामित्यर्थः । आत्मधर्मभूतस्येत्यनेन स्वरूपव्यावृत्तिः, ( पारमार्थिकं सङ्कोचं विकासं च ब्रुवतामिति ) न हि ब्रह्माज्ञानवादिना सङ्कोचविकासौ वक्तुं शक्यौ, तथा सति तावपि व्यावहारिकौ स्यातां न परमार्थौ, सङ्कोचविकासयोरप्यपारमार्थ्ये सङ्कोचविकासविषयभ्रमहेतुतया तिरोधानं वक्तव्यम्, तत्रापि व्यावहारिकसङ्कोचाभ्युपगमे तद्विषयभ्रमहेतुतया पुनरपि तिरोधानमित्यनवस्था स्यादित्यभिप्रायेण पारमार्थिकं सङ्कोचं विकासं चेत्युक्तम् ( सर्वमिदं परिहृतमिति ) देवादिभ्रमस्याधिष्ठानस्फुरणसापेक्षत्वादत्र धर्मिस्वरूपं स्वयम्प्रकाशरूपमधिष्ठानतया स्फुरति, नात्र ज्ञानान्तरापेक्षा अजडत्वात्, जडत्वाद्धि शुक्त्यादेर्ज्ञानान्तरापेक्षा, एवं धर्मिस्वरूपमधिष्ठानं स्फुरति, भ्रमविरोधिनोऽणुत्वनित्यत्वाद्याकारास्ते ज्ञानान्तरवेद्या इति तत्तिरोधानात् भ्रम उपपद्यते । तिरोधानं च प्रकाशनिवृत्तिः, प्रकाशश्च न ज्ञानस्वरूपः, अपि तु प्रसराख्यो ज्ञानधर्मः, प्रकाशरूपप्रसराभावश्च संकोचः, भावान्तरस्यैवाभावत्वात्सङ्कोचाभावः प्रसरः, स एव तिरोधाननिवृत्तिरिति न तदा भ्रमः । एवं सति ज्ञानं धर्मिस्वरूपं च नित्यं ज्ञानधर्मभूतप्रसरस्यैव प्रकाशत्वात् तदभावस्य च सङ्कोचत्वात्प्रसराख्यप्रकाशनिवृत्तिरूपं तिरोधानम् उपपद्यत इत्यर्थः । अयं परिहारो भवत्पक्षे वक्तुमशक्य इत्याह ( भवतस्त्विति ) स्वरूपेऽपि प्रकाशे तस्य सङ्कोचविकासावभ्युपगतौ चेत् न स्वरूपनाशः । तथा च नाभ्युपेतमित्याह ( तस्येति ) त्वन्मते सङ्कोचविकासावभ्युपगतौ स्याताम्, ततः कथं प्रकाशनिवृत्तिरित्यत्राह— ( प्रकाशेति ) प्रकाश एव प्रसरः प्रकाशे-

धानभूताः कर्मादयः कुर्वन्ति । अविद्या चे
तिरोधानं, तिरोधानभूतया तया स्वरूपभूतप्रका
शनाश इति पूर्वमेवोक्तम् । अस्माकं त्वविद्यारूपेण
कर्मणा स्वरूपनित्यधर्मभूतज्ञानप्रकाशः सङ्कु
चितः । तेन देवादिस्वरूपात्माभिमानो भवतीति
विशेषः ।

---

प्रसरः । यद्वा प्रकाशशब्दवाच्यस्य ज्ञानस्य प्रसरः तस्यानुत्पत्तिमित्यर्थ
प्रकाशशब्दो हि धर्मिपरो धर्मपरश्च, 'भानुर्भानुमांस्तेजस्तेजस्वी' इतिवत्
एवकारेण स्वरूपाभावधर्मभूतज्ञानाभावौ च व्यावर्त्तितौ, तिरोधान
भूतास्तिरोधायकभूताः, (कर्मादयः) इत्यादिशब्देन प्रकृतिर्वासना च
गृह्यते 'वासनारेणुकुण्ठितः' 'गुणमायासमावृतः' इत्यादि
वचनात् । एवं स्वपक्षे परपक्षेऽपि स्वरूपनाशप्रसङ्गतदप्रसङ्ग
वैषम्यं वक्तुं तदुपयोग्यर्थशिक्षा कृता । अथ स्वरूपनाशप्रसङ्ग-
तदप्रसङ्गरूपवैषम्यं दर्शयति ( अविद्या चेदिति ) प्रकाशनिवृत्ति
तिरोधानं स्वरूपनाशः स्यात् त्वन्मते । अस्मन्मते आत्मधर्मभूतज्ञान
सङ्कोचस्तिरोधिरिति धर्मिस्वरूपस्य ज्ञानस्य च नित्यत्वमुपपद्यते, ते
सङ्कोचेन भ्रमविरोध्याकाराग्रहणाद्भ्रमोऽप्युपपद्यते इत्यर्थः
ननु भ्रमविरोध्याकारो नामासाधारणधर्मः, आत्मनोऽसाधारण
बुद्धिसुखेच्छादयो गृह्यन्त इति भ्रमो नोपपद्यत इति चेन्न, असाधा
रणधर्मस्य भ्रमविरोधित्वे द्वयमपेक्षितं स्वरूपज्ञानमसाधारणत्वे
ज्ञानं च, शुक्तित्वादयोऽप्यन्यत्रासाधारणत्वेन ज्ञाता एव हि भ्र
विरोधिनः, अध्यासादसाधारणत्वाग्रहणम्—असाधारणत्वाग्रहणा
दध्यास इति परस्पराश्रयो न दोषः स्यात् , बीजांकुरन्यायादिति
एवं तर्केणैव परिहार उक्तः । स्वोक्ता तर्कसरणिः प्रमाणानुसारि

यथोक्तम्– [1]"अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप! सर्वगा॥ संसारतापानखिलानवाप्नोत्यतिसन्ततान्। तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता॥ सर्वभूतेषु भूपाल! तारतम्येन वर्तते"॥ इति। क्षेत्रज्ञानां स्वधर्मभूतस्य ज्ञानस्य कर्मसंज्ञयाऽविद्यया सङ्कोचं विकासं च दर्शयति।

अपि च आच्छादिकाऽविद्या श्रुतिभिश्चैक्योपदेशबलाच्च ब्रह्मस्वरूपतिरोधानहेतुदोषरूपा-

---

णीति दर्शयति (यथोक्तमिति) तारतम्येन वर्तते– इत्यनेन ज्ञानस्य सङ्कोचविकासौ सिद्धौ। न ह्यणुमात्रस्य स्वरूपस्य तारतम्यम्, तस्माद्धर्मभूतज्ञानद्वारकमेवात्मनस्तारतम्यमिति, ज्ञानद्वारकत्वं च तत्रैवोपरितनश्लोकैर्विवृतम् 'अप्राणिमत्सु स्वल्पा सा स्थावरेषु ततोऽधिका' इत्यादिभिः। उदाहृतश्लोकार्थमाह (क्षेत्रज्ञानामिति)।

अत्रोच्यत इत्यादिग्रन्थस्यायमर्थः प्रतिपाद्यः–स्वरूपनाशप्रभृतीनि यानि दूषणानि त्वन्मते लक्ष्यन्ते, तेषामस्मन्मतेऽपि साम्यापादनमनुपपन्नम्, निर्विशेषत्वजीवब्रह्मैकत्वजगन्मिथ्यात्वप्रयुक्तत्वात् तेषां दूषणानामित्यभिप्रायेण स्वभावत इत्यादिग्रन्थजातमुक्तम्। एवं सामान्येनोक्ते सति प्रस्तुतचोद्यविशेषस्य कः परिहार उक्त इत्यभिप्रायेण 'ननु च किमनेनाऽऽडम्बरेणे'त्यादि चोद्यम् उक्तम्। उच्यत इत्यादिना प्रस्तुतचोद्यविशेषपरिहारश्चोक्त इति॥

अथ स्वरूपानुपपत्तिमाह (अपि चेति) आच्छादिकेत्यादिना

---

1. वि० ६-७-६०॥

ऽऽश्रीयते, तस्याश्च * मिथ्यारूपत्वेन प्रपञ्चवत् स्वदर्शनमूलदोषापेक्षत्वात् न सा मिथ्यादर्शनमूलदोषः स्यादिति ब्रह्मैव मिथ्यादर्शनमूलं स्यात्। तस्याश्चानादित्वेऽपि मिथ्यारूपत्वादेव ब्रह्म-

---

तदभ्युपगमप्रकारमाह, आच्छादिकाविद्याशब्दार्थविवरणार्थं ब्रह्मस्वरूपतिरोधानहेतुदोषरूपेत्युक्तम्, दूषयति ( तस्या इति ) यथा 'प्रपञ्चो मिथ्यात्वेन स्वदर्शनहेतुदोषान्तरापेक्षः, तथा दोषोऽपि मिथ्यात्वाद्दोषान्तरापेक्ष इत्यनवस्थादुःस्थत्वान्न सा भेदभ्रममूलदोषः स्यात्, अतः परमार्थदोषेऽभ्युपगन्तव्ये सति तस्य ब्रह्मव्यतिरिक्तत्वे अद्वैतहानिप्रसङ्गाद्ब्रह्मैव दोषः स्यादित्यर्थः । 'उपपादकस्योपपादकान्तरापेक्षा न भवती'ति न्यायः परमार्थविषय इति न तेनात्र परिहारः शक्यते वक्तुम्, कथम्? उच्यते, उपपादकस्योपपादकान्तरानपेक्षत्वं नाम परप्रतीतेः स्वप्रतीतेश्च स्वस्यैव हेतुत्वम्, तच्च परमार्थविषये सम्भवति, परमार्थो हि प्रतीतिनिरपेक्षः स्वरूपेण सन् स्वप्रतीतेः परप्रतीतेश्च हेतुर्भवति । अपरमार्थस्तु न स्वरूपेण सन्, अतः स्वविषयप्रतीत्यतिरेकेण सत्ताभावादात्माश्रयदोषः प्रसज्येत । न हि प्रतीतिः स्वयमेव स्वात्मनो हेतुर्भवतीत्यात्माश्रयदोषप्रसङ्गादुपपादकस्योपपादकान्तरानपेक्षत्वरूपन्यायान्नात्र परिहारः शक्यते वक्तुमित्यभिप्रायेण स्वदर्शनमूलदोषापेक्षत्वादित्युक्तम्। आत्माश्रयदोषो माभूत्,तथा सति 'उपपादकमुपपादकान्तरानपेक्ष'मिति न्यायेन माध्यमिकस्याधिष्ठानापारमार्थ्यं सुवचं भवति, 'उपपादकमुपपादकान्तरानपेक्ष'मिति न्यायेनाधिष्ठानानवस्थायाः परिहृतत्वादिति, एवमनवस्थापरिहारार्थमद्वैतहानिपरिहारार्थं च ब्रह्मैव दोषः स्यादित्यर्थः । प्रपञ्चस्यादिमत्त्वाद्दोषान्तरापेक्षत्वं दोषस्य त्वनादेर्न दोषान्तरापेक्षेति चेत्तत्राह ( तस्याश्चानादित्वेऽपीति ) जीवभेदस्य स्वरूपानादित्वेऽपि दोषसापेक्षत्वाभ्युपगमाज्जीवभेदोऽत्र

दृश्यत्वेनैवानादित्वात्तद्दर्शनमूलपरमार्थदोषानभ्युपगमाच्च ब्रह्मैव तद्दर्शनमूलं स्यात्, तस्य नित्यत्वादनिर्मोक्ष एव ।

---

प्रतिबन्दीत्वेनाभिप्रेतः । मिथ्याभूतस्य प्रतीयमानत्वव्यतिरेकेण स्वरूपाभावात्तत्प्रतीतेश्च स्वरूपप्रयुक्तत्वे सत्युक्तदोषप्रसङ्गात्, अतिरिक्तहेतोश्च पूर्वकालवर्तितया पश्चाद्भाविनो मिथ्याभूतस्य स्वरूपानादित्वमेवानुपपन्नमित्यभिप्रायः । जीवभेदस्य स्वरूपानादित्वेऽपि मिथ्याभूतस्य तस्य ब्रह्मदृश्यत्वेनैवानादित्वात्तदपरमार्थभेददर्शनस्य स्वरूपप्रयुक्तत्वे तदनिर्मोक्षप्रसङ्गात् निर्मोक्षे च स्वरूपोच्छेदप्रसङ्गाच्च तद्दर्शनहेतुदोषापेक्षाऽस्तीति चेद् दोषस्यापि तत्तुल्यमित्यर्थः । ( परमार्थदोषानभ्युपगमाच्चेति ) अद्वैतहानिप्रसङ्गादिति भावः । एवमनवस्थाऽद्वैतहानिपरिहारार्थं ब्रह्मैव दोषः स्यादित्यर्थः । ततः किमनिष्टं स्यादित्यत्राह ( तस्येति ) दुर्घटत्वेनानवस्थापरिहारोऽप्यतिदुर्बलः, तथा सति तत्त्वज्ञानोदयेऽपि सा तिष्ठतु उपपत्त्यनपेक्षत्वात् । न हि निवर्तकसन्निधौ निवर्त्यं तिष्ठतीति चेत्तर्ह्युपपत्तिमती सेति न दुर्घटत्वम् । किञ्च प्रपञ्चस्यापि मिथ्यात्वेन दुर्घटत्वान्मूलदोषापेक्षा न स्यात्, कारणेन विना कार्यं न सम्भवतीति चेत् उपपत्त्यपेक्षत्वं स्यात् । जीवभेदोऽपि दुर्घटत्वान्मूलदोषानपेक्षः स्यात् । अधिष्ठानापारमार्थ्येऽपि दुर्घटत्वादधिष्ठानान्तरानपेक्षत्वेनानवस्था न स्यात् । दुर्घटत्वं नाम परमार्थत्वप्रयुक्तोपपत्त्यनपेक्षत्वम्, अपरमार्थत्वप्रयुक्तोपपत्तिरपेक्षितैव, यथा प्रासादनिगरणादिषु परमार्थत्वप्रयुक्तोपपत्तिरल्पास्येन विपुलनिगरणायोगरूपाऽपेक्षिता, निगरणसाधनस्य निगरणीयाद्विपुलत्वं ह्यपेक्षितं पारमार्थ्ये, तच्च प्रासादनिगरणादावनपेक्षितम् । एवं परमार्थत्वप्रयुक्तोपपत्तिरेवानपेक्षिता, अपरमार्थत्वप्रयुक्तोपपत्तिस्त्वपेक्षिता, अधिष्ठानं त्वपरमार्थत्वप्रयुक्तमिति अधिष्ठा-

अत एवेदमपि निरस्तम्— एकमेव शरीरं जीववत्, निर्जीवानीतराणि शरीराणि, स्वप्नदृष्टनानाविधशरीराणां यथा निर्जीवत्वं तत्र स्वप्नद्रष्टुः शरीरमेकमेव जीववत्, तस्य स्वप्नवेलायां दृश्यभूतनानाविधानन्तशरीराणां निर्जीवत्वमेव अनेनैकेनैव परिकल्पितत्वात् जीवा मिथ्याभूता इति, ब्रह्मणा स्वस्वरूपव्यतिरिक्तस्य जीवभावस्य सर्वशरीराणां च कल्पितत्वादेकस्मिन्नपि शरीरे शरीरवज्जीवसद्भावस्य च मिथ्यारूपत्वात् सर्वाणि शरीराणि मिथ्यारूपाणि, तत्र जीवभावश्च मिथ्यारूप इत्येकस्य शरीरस्य तत्र जीवसद्भाव-

---

त्नापारमार्थ्ये तदपेक्षयाऽनवस्थेति चेत्—दोषश्चापरमार्थत्वप्रयुक्त इति दोषापारमार्थ्ये तदपेक्षयाऽनवस्था स्यादिति ।

एकजीववादं निराकरोति (अत एवेति) अत एव—ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्यात्वाभ्युपगमादेवेत्यर्थः । किं निरस्तमिति शङ्कायां निरसनीयमुपन्यस्यति (एकमेवेति) स्वप्नदृष्टशरीराणां निर्जीवत्वे कथमेकस्य सजीवत्वमितरेषां निर्जीवत्वं चेति शङ्कायामेकस्य सजीवत्वमितरेषां निर्जीवत्वं चाह—तत्रेत्यादिना ग्रन्थद्वयेन, तेषां मिथ्यात्वं कथमित्यत्राह (अनेनैकेनैवेति) इतिः समाप्तौ, एतत्कथं निरस्तं भवतीति शङ्कायामत एवेत्यभिमतमर्थं विवृणोति (ब्रह्मणेति) जीवभावो जीवत्वम्, किं प्रातिभासिकजीवैकत्वमुच्यते ? उत पारमार्थिकजीवैकत्वम् ? । प्रातिभासिकं जीवैकत्वं चेत्स्वप्नजागरयोर्जीवबहुत्वप्रतिभासाद् दृष्टान्तदार्ष्टान्तिकयोः

स्य च न कश्चिद्विशेषः । अस्माकं तु स्वप्ने द्रष्टुः स्वशरीरस्य तस्मिन्नात्मसद्भावस्य च प्रबोधवेलायामबाधितत्वात्, अन्येषां शरीराणां तद्गतजीवानां च बाधितत्वात् ते सर्वे मिथ्याभूताः, स्वशरीरमेकं तस्मिन् जीवभावश्च परमार्थ इति विशेषः ।

अपि च केन वाऽविद्यानिवृत्तिः, सा च कीदृशीति विवेचनीयम् । ऐक्यज्ञानं निवर्त्तकम्, निवृत्तिश्च— अनिर्वचनीयप्रत्यनीकाकारेति चेत्—

---

जीवबहुत्त्वप्रतिभासः सार्वलौकिको विरुध्येत, पारमार्थिकजीवैकत्वं चेत् एकोऽपि जीवो न पारमार्थिकतयाऽभ्युपगत इति तत्सुतरामनुपपन्नमित्यभिप्रायः । ब्रह्मणा कल्पितत्वादित्यन्वयः । स्वस्वरूपव्यतिरिक्तस्येति हेतुगर्भविशेषणम् ( न कश्चिद्विशेष इति ) । प्रातिभासिकत्वं स्वप्नदृष्टशरीरस्थस्यान्यशरीरस्थस्य च जीवभावस्याविशिष्टम् ,पारमार्थिकत्वं तु न कस्यचिदपीत्यर्थः । प्रपञ्चसत्यत्वपक्षे कथं स्वप्नद्रष्टृतद्दृश्यविशेषः सिध्यतीत्यत्राह ( अस्माकं त्विति ) तस्मिन् जीवभावश्च— जीवसद्भाव इत्यर्थः । लोकसिद्धप्रक्रियया स्वाप्नार्थानां बाधाभ्युपगमः, सूत्रकारेणापि हि तथा कृतं 'वैधर्म्याच्च न स्वप्नादिवत्' इत्यत्र ।

एवमेकजीववादः प्रसङ्गान्निरस्तः । अथ निवर्त्तकानुपपत्तिं निवृत्त्यनुपपत्तिं चाह ( अपि चेत्यादिना ) किंशब्दः क्षेपार्थः । निवर्तकनिवृत्त्योः पराभ्युपगतप्रकारं शङ्कते ( ऐक्येति ) तत्र निवृत्तिं दूषयति ( अनिर्वचनीयेति ) शब्दस्वरूपस्यैव पञ्चमकोट्यभावो दर्शितः । अनिर्वचनीयप्रत्यनीकं निर्वचनीयम्, नञर्थस्य हि स्वरूपनिरूपक एव, प्रत्यनीक इति भावः । अनिर्वचनीयप्रत्यनीकं न तावदनिर्वचनीयम्,

अनिर्वचनीयप्रत्यनीकं निर्वचनीयम्, तच्च सद्वा असद्वा द्विरूपं वा, कल्पान्तरं न विद्यते । ब्रह्मव्यतिरेकेणैतदभ्युपगमे पुनरविद्या न निवृत्ता स्यात्। ब्रह्मैव चेन्निवृत्तिः, तत्प्रागप्यविशिष्टमिति वेदान्तज्ञानात् पूर्वमेव निवृत्तिः स्यात्, ऐक्यज्ञानं

---

अपि तु निर्वचनीयमेव, तत्र त्रैविध्यमाह ( तच्चेति ) एवं शब्दस्वभावात् पञ्चमकोटिर्नास्ति, अर्थस्वभावाच्च तथा, अविद्यानिवृत्तिः किं ख्याता ? उत अख्याता ? । अख्यातत्वे असत्त्वम्, ख्यातत्वे किं बाध्या ? उताबाध्येति विकल्पः, बाध्या चेदनिर्वचनीयता । किञ्च निवृत्तेरसत्त्वेऽपि तुल्यमेव तत्, अबाध्या चेत्सत्त्वम् , अबाध्यत्वेऽप्यादिमत्त्वान्न सत्त्वमिति चेन्न, आदिमत्त्वं नित्यवैलक्षण्यं, न तु सद्वैलक्षण्यम्, प्रतिपन्नोपाधावबाध्यत्वं हि सत्यत्वं, तदेव हि सत्त्वं त्वन्मते बाधात् सद्व्यावृत्तिरित्युक्तेः, तत्र सत्त्वपक्षे किं काल्पनिकसत् ? उताकाल्पनिकसदिति विकल्पमभिप्रेत्याकाल्पनिकसत्त्वे च ब्रह्मव्यतिरिक्तत्वपक्षे अद्वैतहानिप्रसङ्गः । अव्यतिरिक्तत्वपक्षे दूषणं वक्ष्यते । काल्पनिकसत्त्वे दूषणमाह ( ब्रह्मव्यतिरेकेणेति ) व्यावहारिकसद्धि अनिर्वचनीयं तस्मादविद्या न निवृत्ता स्यात् । असत्त्वपक्षेऽपि दूषणमिदमेव । निवृत्तिरसती चेत्, द्वौ नञौ प्रकृतमर्थं सूचयत इति न्यायादविद्यानिवृत्ता स्यात् । द्विरूपत्वपक्षेऽपि सदंशेनाद्वैतहानिः, असदंशे निवृत्तेरसत्त्वादविद्यास्थितिरेवेत्यर्थः । सदंशेऽपि काल्पनिकत्वाकाल्पनिकत्वविकल्पः पूर्ववत्, अकाल्पनिकसत्त्वे च ब्रह्मस्वरूपानतिरिक्तत्वपक्षमाशङ्क्य दूषयति ( ब्रह्मैवेति ) तत्त्वज्ञानात्पूर्वमेव निवृत्तिरस्तु, ततः किमित्यत्राह ( ऐक्यज्ञानमिति ) ननु यथा भावान्तराभाववादपक्षे भूतलमेव घटाभावोऽभ्युपगतः, तथा स्वरूपमेवाविद्यानिवृत्तिः

निवर्तकं, तदभावात् संसार इति भवद्दर्शनं विहन्यते।

किञ्च निवर्तकज्ञानस्याप्यविद्यारूपत्वात्तन्निवर्तनं केनेति वक्तव्यम्, निवर्तकज्ञानं स्वेतरसमस्तभेदं निवर्त्य क्षणिकत्वादेव स्वयमेव विनश्यति; दावानलविषनाशनविषान्तरवदिति चेन्न, निवर्तकज्ञानस्य ब्रह्मव्यतिरिक्तत्वेन तत्स्वरूपतदुत्पत्तिविनाशानां मिथ्यारूपत्वात् तद्वि-

---

स्यादिति चेन्न, भूतले वैलक्षण्यमस्त्येव, कालविशेषविशिष्टदेशविशेषत्वं तत्, तदेव घटाभावः, तच्चाभाववादिनाऽभ्युपगतम्। एकस्मिन्देशे कालभेदेन घटभावाभावसम्भवात्, एकस्मिन्काले देशभेदेन घटभावाभावसम्भवाच्च। अनेनाभाववादिभिरुक्तो विकल्पः परिहृतः। केवलभूतलमेवाभाव इति वाक्ये केवलशब्दार्थः किं भूतलातिरिक्तः? तर्ह्यभावाङ्गीकारः, भूतलमेव चेत् सघटेऽप्यभावप्रसङ्ग इति हि तैर्विकल्प्य दूषणमुक्तं, तत् परिहृतमनेन वैलक्षण्येन। एवं वैलक्षण्यानभ्युपगमाद् ब्रह्मस्वरूपमेव निवृत्तिर्भवितुं नार्हति, स्वरूपमेवाविद्यानिवृत्तिश्चेदविद्यानुदय एव स्यात्। निवृत्तौ सत्यां निवर्त्यस्थित्यनुपपत्तेः, ब्रह्मस्वरूपमेव निवृत्तिश्चेत्पञ्चमकोटित्वं च न स्यात् स्वरूपस्य सत्त्वात्।

एवं निवृत्तिदूषणेनैव निवर्तकेऽपि दूषिते सति मुखान्तरेणापि दूषणमस्तीत्यभिप्रायेणाह (किञ्चेति) किंशब्दः क्षेपार्थः। तदभ्युपगमप्रकारं शङ्कते (निवर्तकेति) दूषयति (नेति) वस्तुन उत्पन्नस्यैव हि वस्तुनो विनाशः, उत्पत्त्यादेः काल्पनिकत्वेनं विनाशोऽपि काल्पनिक इति तद्विनाश–तद्विषयभ्रम–भ्रान्तभ्रमहेतुरूपाविद्यादौ

नाशरूपाऽविद्या तिष्ठत्येवेति तद्विनाशदर्शनस्य निवर्त्तकं वक्तव्यमेव । दावाग्न्यादीनामपि पूर्वावस्थाविरोधिपरिणामपरम्पराऽवर्जनीयैव ।

अपि च चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता, अध्यासरूप इति चेन्न, तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात् तत्कर्तृत्वानुपपत्तेः । ब्रह्मस्वरूपमेवेति चेन्न, ब्रह्मणो निवर्तकज्ञानं प्रति ज्ञातृत्वं किं स्वरूपम् ? उताध्यस्तम् ? अध्यस्तं चेत्, अयमध्यासस्तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव, तन्निवर्तकान्तराभ्युपगमे तस्यापि त्रिरूपत्वादनव-

---

स्थिते सति तन्निवर्तकं वक्तव्यमित्यर्थः । स्वरूपतदुत्पत्तीत्यत्र स्वरूपशब्दः स्थितिवाची ( तद्विनाशरूपेति ) विनाशानुबन्धिनां भ्रमतदाश्रयतद्धेतूनामपि विनाशशब्देन विवक्षा , तद्विनाशदर्शनस्येत्यत्रापि तदाश्रयतत्कल्पकाविद्या—तत्कल्पनीयानां च प्रदर्शनं कृतम् । मुखान्तरेण दूषयति ( दावाग्न्यादीनामपीति ) दावग्न्यादीनां विनाशो नाम पूर्वावस्थाविरोध्यवस्थान्तरप्राप्तिर्न तु द्रव्याभावः । एवमविद्याया अवस्थान्तरप्राप्तौ सा न निवृत्ता स्यादित्यर्थः ।

ज्ञात्रनुपपत्तिं दर्शयति ( अपि चेति ) निषेध्यतया—निवर्त्यतया । किमध्यासरूपो ज्ञाता ? उत ब्रह्मैव ज्ञातृ ? इति विकल्पोऽभिप्रेतः ब्रह्मैवेति पक्षे ज्ञातृत्वधर्मे विकल्पः—( ज्ञातृत्वं किं स्वरूपम् ? उताध्यस्तमिति ) ( तस्यापि त्रिरूपत्वादिति ) निवर्त्तकज्ञानस्य त्रिरूपत्वं ज्ञातृज्ञेयानुव-

स्यैव, सर्वस्य हि ज्ञानस्य त्रिरूपत्वविरहे ज्ञानत्वमेव हीयते, कस्यचित्कञ्चनार्थविशेषं प्रति सिद्धिरूपत्वात्, ज्ञानस्य त्रिरूपत्वविरहे भवतां स्वरूपभूतज्ञानवन्निवर्तकज्ञानमप्यनिवर्तकं स्यात्, ब्रह्मस्वरूपस्यैव ज्ञातृत्वाभ्युपगमे अस्मदीय एव पक्षः परिगृहीतः स्यात्। निवर्तकज्ञानस्वरूपज्ञातृत्वं च स्वनिवर्त्यान्तर्गतमिति वचनं भूतलव्यतिरिक्तं कृत्स्नं छिन्नं देवदत्तेनेत्यस्यामेव छेदनक्रियायामस्याश्छेदनक्रियायाश्छेत्तृत्वस्य च छेद्यान्तर्भाववचनवदुपहास्यम्।

अपि च निखिलभेदनिवर्तकमिदमैक्यज्ञानं केन ज्ञातमिति विवेचनीयम्, श्रुत्यैवेति चेन्न,

---

न्धित्वकृतम्, निवर्तकज्ञानस्य त्रिरूपत्वाभावे दूषणमाह (सर्वस्येति) ज्ञानस्य—प्रमाणजन्यज्ञानस्य, न तु स्वरूपभूतज्ञानस्येत्यर्थः। कथं ज्ञानत्वं हीयते इत्यपेक्षायामन्वयव्याप्तिं दर्शयति (कस्यचिदिति) सिद्धिरूपत्वात्—प्रकाशरूपत्वात्। दूषणान्तरमाह यद्वा व्यतिरेकव्याप्तिं दर्शयति— (त्रिरूपत्वविरह इति) ज्ञातृत्वमभ्यस्तमिति पक्षो दूषितः। अथ स्वरूपमितिपक्षाङ्गीकारेऽपसिद्धान्तप्रसङ्ग इत्याह (ब्रह्मेति) निवर्तकज्ञानस्य निवर्तकान्तरापेक्षत्वे हि अनवस्था। न चान्यापेक्षा, स्वयं च ज्ञातृत्वं विषयश्च सर्वं स्वनिवर्त्यमिति चेत्तत्राह (निवर्तकेति) ज्ञातृत्वादिकं सर्वं स्वयं च स्वनिवर्त्यान्तर्गतमिति वचनमङ्गुल्यग्रादिवाक्यवदयोग्यार्थत्वान्न प्रमितिजनकमिति भावः।

अथ सामग्र्यनुपपत्तिमाह (अपि चेति) केन ज्ञातम्—न केना-

तस्या ब्रह्मव्यतिरिक्तत्वेन अविद्यापरिकल्पितत्वात् प्रपञ्चबाधकज्ञानस्योत्पादकत्वं न सम्भवति, तथा- हि दुष्टकारणजन्यमपि रज्जुसर्पज्ञानं न दुष्टकारणजन्येन 'रज्जुरियं न सर्पः' इति ज्ञानेन बाध्यते, रज्जुसर्पज्ञानभये वर्तमाने केनचिद्भ्रान्तेन पुरुषेण रज्जुरियं न सर्प इत्युक्तेऽप्ययं भ्रान्त इति ज्ञाते सति तद्वचनं रज्जुसर्पज्ञानस्य बाधकं न भवति भयं च न निवर्तते, प्रयोजकज्ञानवतः श्रवणवेलायामेव हि ब्रह्मव्यतिरिक्तत्वेन श्रुतेरपि भ्रान्तिमूलत्वं ज्ञातमिति। किञ्च निवर्तकज्ञानस्य ज्ञातुस्तत्सामग्रीभूतशास्त्रस्य च ब्रह्म-

---

पीति भावः। श्रुतेस्सामग्रीत्वमाशङ्क्य दूषयति (श्रुत्यैवेति) अविद्याकल्पितवाक्यजन्यं ज्ञानं न भ्रमनिवर्तकमित्यर्थः। निवर्त्यं दुष्टकारणजन्यत्वाद् दुष्टकारणजन्येनापि ज्ञानेन बाध्यत इति चेत्तत्राह (तथा हीति) तदेव विवृणोति (रज्जुसर्पेति) बाधकस्य दुष्टकारणजन्यत्वे ज्ञाते सति हि तदनिवर्त्तकम्। अत्र तु न दुष्टकारणजन्यत्वं ज्ञातमिति चेत्तत्राह (प्रयोजकेति)-प्रयोजकज्ञानवतः-ब्रह्मव्यतिरिक्तं कृत्स्नं मिथ्येति मिथ्यात्वे प्रयोजकं ब्रह्मव्यतिरिक्तत्वमिति ज्ञानवत इत्यर्थः। निदिध्यासनेन निरस्तसमस्तभेदवासनस्य निवर्तकज्ञानोत्पत्तिरित्यभ्युपगमात् श्रवणवेलायामेव श्रुतेर्भ्रान्तिमूलत्वज्ञानाद् न सा बाधकज्ञानहेतुरित्यर्थः। भ्रान्तिमूलत्वं ज्ञातमिति बाधकज्ञानस्योत्पादकत्वं न सम्भवतीति पूर्वेणान्वयः। सामग्रीदूषणप्रसङ्गात् ज्ञानज्ञातृत्वमिथ्यात्वेऽप्यनुगतं दूषणमाह (निवर्तकेति) न हि विर

व्यतिरिक्ततया यदि बाध्यत्वमुच्यते, हन्त तर्हि प्रपञ्चनिवृत्तेर्मिथ्यात्वमापततीति प्रपञ्चस्य सत्यता स्यात्, स्वप्नदृष्टपुरुषवाक्यावगतपित्रादिमरणस्य मिथ्यात्वेन पित्रादिसत्यतावत् । किञ्च तत्त्वमस्यादिवाक्यं न प्रपञ्चस्य बाधकं भ्रान्तिमूलत्वात् भ्रान्तप्रयुक्तरज्जुसर्पबाधकवाक्यवत् ।

ननु च स्वप्ने कस्मिँश्चिद्भये वर्तमाने स्वप्नदशायामेवायं स्वप्न इति ज्ञाते सति पूर्वभयनिवृत्तिर्दृष्टा, तद्वदत्रापि सम्भवतीति । नैवम्, स्वप्नवेलायामेव सोऽपि स्वप्न इति ज्ञाते सति

---

द्वद्वयस्य मिथ्यात्वं सम्भवति, अपि त्वन्यतरस्यैव मिथ्यात्वम्, तच्चाभ्युपगतम्- परेण- सर्वशून्यवादिनोक्तस्याधिष्ठानमिथ्यात्वस्य बाधितत्वे सत्यत्वं भवति, न ह्यधिष्ठानभूता संविचिर्मिथ्यात्वमुभयं च मिथ्या संभवतीति । तस्माद्ब्रह्मव्यतिरिक्तत्वोपाधिर्निवृत्तेरप्यविशिष्ट इति निवृत्तिर्मिथ्या भवतीति तन्निवृत्तेर्निवर्त्यस्य चोभयस्य मिथ्यात्वं मातृत्ववन्ध्यात्वयोरिवानुपपन्नमित्यर्थः । तत्र दृष्टान्तमाह ( स्वप्नेति ) निवृत्तेर्मिथ्यात्वे निवर्त्यस्थितिरेव, न तु निवर्त्यसत्यत्वमिति चेत्- न, निवर्त्यस्थितेर्यावत्कालं बाधानुदयात्सत्यत्वसिद्धेः, अबाधिततया हि स्थितिः सत्यत्वम्, ( तत्त्वमस्यादीति ) अयमनिष्टप्रसङ्गो न त्वनुमानम्, व्याप्तिप्रदर्शनार्थं प्रतिज्ञाहेतुरूपेणोक्तम् ।

भ्रान्तिमूलस्य ज्ञानस्यापि निवर्तकत्वं दृष्टान्तमुखेन चोदयति ( ननु चेति ) परिहरति ( नैवमिति ) ( सोऽपि स्वप्न इति ज्ञाते सतीति ) प्रथमस्वप्नबाधके द्वितीयस्वप्नेऽपि स्वप्न इति ज्ञाते भयानिवृत्तिर्दृष्टेः;

चाकार्यमेव च । अयथावत् प्रजानाति बुद्धिः सा पार्थ ! राजसी । अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ ? तामसी ॥" इति । सर्वान् पुराणार्थान् ब्रह्मणः सकाशादधिगम्यैव सर्वाणि पुराणानि पुराणकाराश्चक्रुः । यथोक्तम्—[1]"कथयामि यथा पूर्वं दक्षाद्यैर्मुनिसत्तमैः । पृष्टः प्रोवाच भगवानब्जयोनिः पितामहः ॥" इति । अपौरुषेयेषु परस्परविरुद्धेषु कथमिति चेत्; तात्पर्यनिश्चयाद-

शरादिप्रोक्तत्वं सङ्घटत इत्यत्राह ( सर्वानिति ) पौरुषेयेषु हि विरोधे तु वक्तृगुणानुगुणप्रामाण्याप्रामाण्यविभाग उपपद्यते । अपौरुषेयश्रुतिवाक्येषु गुणानुगुणप्रामाण्याप्रामाण्यविभागेन निर्वाहो नोपपद्यत इति शङ्कते ( अपौरुषेयेष्विति ) परिहरति ( तात्पर्येति ) अभेदश्रुत्यादीनां 'पूर्वापरपर्यालोचनादिना निर्वाहस्योक्तत्वात्तेनैव प्रकारेणात्राप्यविरोधनिर्वाह इत्यभिप्रायेण पूर्वमेवोक्त इत्युक्तम्, 'एक एव रुद्र' इत्यादिवाक्यस्य पूर्वापरपर्यालोचनया क्रतोरेकदेवताकत्वपरं तद्वाक्यमिति निश्चीयते, हरिकेशायेति पदं पदाध्ययनपारम्पर्यादेव व्याख्यातम्, 'सोमः पवते' इत्यादावृग्वेदमन्त्रे सोमशब्दोऽपि सोमलतापरः, योगाद्रूढेर्बलीयस्त्वात्समासविभागाभावेन पदक्रमाध्ययनात्सोमलताविषयस्य मन्त्रस्य विनियोगाच्च सोमशब्दस्योमासहितवाचित्वाभावात् । किञ्च सोमशब्दस्य देवतापरत्वेऽपि रूढ्याऽवगतश्चन्द्र एव स्वरसतः प्रतीयते, न योगावसेयो

1. वि० १-२-८ ॥

विरोधः पूर्वमेवोक्तः।

यदपि चेदं विरुद्धवद् दृश्यते- [1]"प्राणं मनसि सह करणैर्नादान्ते परमात्मनि--सम्प्रतिष्ठाप्य ध्यायीतेशानं प्रध्यायीतैवं सर्वमिदम्-- ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते न कारणम्....कारणं तु ध्येयः- सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येयः" [2]"यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्। ततो यदुत्तरतरं तदरूपमनामयम्। य एतद्विदुरमृतास्ते भवन्ति। अथेतरे दुःखमेवापियन्ति। सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः। सर्वव्यापी च भगवाँस्तस्मात्सर्वगतः शिवः" [3]"यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः। तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी"

---

रुद्रः, अतो न किञ्चिदेतत्। अस्मिन्मन्त्रे जनितेति पदं च प्रीतिजननार्थम्। एवमन्यदपि प्रकरणपर्यालोचनादिभिः परिहर्तव्यमित्यभिप्रायः।

एवं वेदपूर्वभागवचसां विरोधे निर्वाहोऽस्तु, उपनिषद्भागेष्वन्यपरत्वाद्यभावात् तत्र कथं निर्वाह इत्यत्राह (यदपीति) आदिशब्देनाथर्वशिरोवाक्यानि चतुर्मुखकारणत्वपराणि 'हिरण्यगर्भः

---

1. अ० शिखोप० ॥ 2. श्वे० ३-१८ ॥ 3. श्वे० ४-३५ ॥

इत्यादि "नारायणः परं ब्रह्मे"ति च पूर्वमेव प्रति-पादितम्, तेनास्य कथमविरोधः?, अत्यल्पमेतत्-[1]"वेदवित्प्रवरप्रोक्तवाक्यन्यायोपबृंहिताः। वेदाः साङ्गा हरिं प्राहुर्जगज्जन्मादिकारणम्। [2]"जन्मा-द्यस्य यतः, [3]"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे"ति जगज्जन्मादिकारण ब्रह्मेत्यवगम्यते। तच्च जगत्सृष्टिप्रलयप्रकरणेष्वे वावगन्तव्यम्, [4]"सदेव सोम्येदमग्र आसीदे

समवर्तताग्रे' 'धाता यथापूर्वमकल्पयत्' 'प्रजापतिः प्र असृजत' इत्यादीनि च वाक्यानि विवक्षितानि। ततः किमित्य (नारायण इति)।

परिहरति (अत्यल्पमित्यादिना) तत्र प्रथमं स्वपक्षं प्र जानीते वेदविदित्यादिश्लोकेन, (वेदवित्प्रवरप्रोक्तवाक्यन्याय बृंहिता इति) स्मृतीतिहासपुराणमीमांसान्यायोपबृंहिता इत्य तत्र स्वपक्षस्य प्रतिज्ञातस्य प्रमाणमुपन्यसिष्यन्प्रथमं कारणवा न्युदाहरिष्यन्सूत्रपुरःसरं लक्षणवाक्यमाह (जन्मादीति) ज त्कारणं वस्तु ब्रह्मास्तु, तच्च जगत्कारणं किमित्यपेक्षाया (तच्चेति) (जगत्सृष्टिप्रलयप्रकरणेष्वेवेति) न तूपासनादिवि परेषु 'शम्भुराकाशमध्ये ध्येय' इत्यादिष्वित्यर्थः। तत्र हि का त्वानुवादेन ध्येयताविधिपरत्वम्, जगत्सृष्टिप्रलयप्रकरणेषु त

1. १. ॥ 2. ब्र० १-२ ॥
3. तै० भृ० १ ॥ 4. सामश्रु०—छा० ६-२-१ ॥

मेवाऽद्वितीय"मिति जगदुपादनता-जगन्निमित्तता जगदन्तर्यामितादिमुखेन, परमकारणं सच्छब्दे-नाभिहितं ब्रह्मेत्यवगतम्।

अयमेवार्थः [1]"ब्रह्म वा इदमेकमेवाग्र आसी दिति शाखान्तरे ब्रह्मशब्देन प्रतिपादितः, अनेन सच्छब्देनाभिहितं ब्रह्मेत्यवगतम्। अयमेवार्थः-शाखान्तरे [2]"आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिष"दिति तथा सद्ब्रह्मशब्दाभ्या-मात्मैवाभिहितं इत्यवगम्यते। तथा च शाखान्तरे

त्यादिभिर्बहुभिः शब्दैः कारणत्वप्रतिपादनान्न नारायणस्यैव कारणत्व-सिद्धिरित्यत्राह (सदेवेति)

गतिसामान्यन्यायात्सर्वेषां कारणवाक्यानामैककण्ठ्यमभिप्रेत्य उदाहृतवाक्यैकार्थं वाक्यान्तरं दर्शयति (अयमेवेति) कारणवाक्य-जातैकार्थ्यं सिद्धम्। सच्छब्दस्य ब्रह्मशब्दार्थे पर्यवसानमाह (अनेनेति) वाक्यान्तरमुक्तवाक्यैकार्थमाह (अयमेवेति) अय-मेवार्थः प्रतिपादित इत्यर्थः। सद्ब्रह्मशब्दयोरात्मपर्यवसानमाह (तथेति) आत्मशब्दस्य सद्ब्रह्मशब्दापेक्षया विशेषशब्दत्वेऽपि नारायणशब्दापेक्षया सामान्यशब्दत्वात् तत्र पर्यवसानमाह (तथा चेति) शिवस्य कारणत्ववादिनाऽऽप्यापेक्षिकसामान्यविशेष-भावोऽभ्युपेत्यः, अन्यथा बहुकारणत्वप्रसङ्गात, तत्र शिवादि-शब्दानामपि नारायणशब्दापेक्षया सामान्यशब्दत्वात् नारायणे पर्यवसानमिति भावः। यथा 'पशुना यजेते'त्यत्र पशुसामान्यवा-

१. शुक्ल० य० शा० बृ० ३-४-१० ॥ २. अथर्वशा० ऐत० १-४ ॥

[1]"एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणी"त्यादिना सद्ब्र-

चिपशुशब्दः 'छागस्य वपाया मेदस' इति मन्त्रस्थच्छागशब्दोक्तविशेषे पर्यवस्यति, एवं सच्छब्दो बृहदबृहत्साधारणस्तद्ब्रह्मशब्दोक्तविशेषे पर्यवस्यति, चेतनाचेतनसाधारणो ब्रह्मशब्दश्चेतनैकान्तात्मशब्दोक्तविशेषे पर्यवस्यति । तथाऽऽत्मशब्दः सर्वचेतनसाधारणो नारायण एव विशेषे पर्यवस्यतीति नारायण एव सद्ब्रह्मात्मशब्दैरभिधीयत इत्यर्थः । ननु 'एको ह वै नारायण आसी'दित्यत्र अनुवादसूचकहवैशब्दश्रवणात् 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त' इति वाक्यवदिदमपि वाक्यमनुवादपरमिति वाक्यान्तरसापेक्षम्, तत्र 'तद्वृत्तमेवकारस्यादुपादेयलक्षण'मिति विधित्वसूचकैवकारवता 'न सन्न चासदित्यादिवाक्येनोक्तः शिव एवानूद्यत इति । अत्रोच्यते 'अप्राप्ते हि शास्त्रमर्थव'दिति न्यायेन स्वतःप्राप्तस्य . विधित्वस्य हवैशब्दो न भञ्जकः, यथा 'यदाग्नेयोऽष्टाकपाल' इत्यत्र यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमित्यनुवादसूचकयच्छब्दसद्भावेऽपि 'वचनानि त्वपूर्वत्वा'दिति सूत्रेण विधित्वं स्थापितम्, प्रमाणान्तराप्राप्तत्वात्, तथा 'उपरि हि देवेभ्यो धारयती'त्यत्र हिशब्दसद्भावेऽपि 'विधिस्तु धारणेऽपूर्वत्वात्' इति सूत्रेण विधित्वं स्थापितं प्रमाणान्तराप्राप्तत्वात्, तस्मान्न स्वतःप्राप्तविधित्वभञ्जको हवैशब्दः । अपि तु प्रमाणान्तरेण विधित्वे भग्ने प्रयुक्तशब्दस्य गतिप्रदर्शकः, आकाशकारणत्ववाक्ये त्वयोग्यत्वादिना विधित्वभङ्गाद्धवैशब्दोऽनुवादरूपताज्ञापकः, अत्र तु प्रमाणान्तराप्राप्तत्वाद्विधित्वभङ्गाभावाच्च हवैशब्दो न स्वतःप्राप्त-

1. महोपनि० ॥

ह्यात्मादिपरमकारणवादिभिः शब्दैर्नारायण एवाभिहित इति निश्चीयते[1] "यमन्तः समुद्रे कवयो

विधित्वभञ्जकः, 'शिव एवे'त्यनेन विधित्वं भग्नमिति चेन्न, 'शिवास्ते सन्तु पन्थानः' 'शिवं कर्मास्तु' 'शिवः शिवानामशिवोऽशिवानाम्,' 'यो वः शिवतमो रस' इत्यादिष्वर्थान्तरपरत्वदर्शनेन शिवशब्दस्य साधारणत्वात्, साधारणोऽपि विधित्वभञ्जक इति चेत्सदेवेत्यादिशब्दात् शिव एवेत्यस्यानुवादरूपत्वमस्तु, तस्मात्साधारणशिवशब्दोऽपि नारायणपर्यवसायीति। 'एको ह वै' इति वाक्यस्य अनुवादरूपत्वमस्तु, तथाऽपि 'विष्णुस्तदासीद्धरिरेव निष्कल' इत्यादिस्वसमानार्थवाक्यश्रवणात्तदनुवादित्वमेवेति न विरुद्धार्थपरवाक्यानुवादित्वम्। किञ्च शिवस्य कारणत्वमनुवदतीति चेत् 'न ब्रह्मा नेशान' इत्यनन्तरवाक्यव्याहतिः 'त्र्यक्षश्शूलपाणिः पुरुषोऽजायत' इत्युत्तरवाक्यव्याहतिश्च, तस्मान्नारायणस्यैव परमकारणत्वप्रतिपादकमिदं वाक्यमित्यभिप्रायः। अत्र शिवशब्दः साधारण एव व्युत्पन्नः, तस्मात्साधारणः शिवशब्दोऽपि नारायणपर्यवसायीति 'एको ह वा' इत्यादिवाक्यं नारायणकारणत्वविधायकमेवेति, 'विष्णुस्तदासीद्धरिरेव निष्कल' इत्यादीनि कारणवाक्यान्यप्यनुसंधेयानि। अथोक्तार्थे प्रमाणान्तरं च वदयन्नर्थाद्धिरण्यगर्भस्य कारणत्वशङ्कां च निराकरोति (यमन्तरित्यादिना) अत्र समुद्रशायित्वलिङ्गेन अस्य प्रकरणस्य नारायणपरत्वनिश्चयार्थं 'यमन्तस्समुद्र' इति वाक्यमुपात्तम्, आदिशब्देन 'विद्युतः पुरुषादधी'त्युक्तं विद्युद्वर्णपुरुषत्वं च विवक्षितम्, 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पार' इति श्रुतेर्विद्युद्वर्णपुरुषत्वं हि परमपुरुषलिङ्गम्, जगत्कारणत्वसर्वेश्वरत्वमोक्षप्रदत्वरूपपरत्वदर्शनार्थं 'नैनमूर्द्ध्व'मित्यादिवाक्यमुदाहृतम्, 'अद्भ्यः सम्भृत'

1. तै० ना० ६-१-३ ॥

वयन्ति" इत्यादि,— [1]"नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् । न तस्येशे कश्चन तस्य नाम महद्यशः न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति" इति सर्वस्मात् परत्वमस्य प्रतिपाद्य [2]"न तस्येशे कश्चन" इति तस्मात्परं किमपि न विद्यत इति च प्रतिषिध्य [3]"अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ" इति तेनैकवाक्यतां गमयति । तच्च महापुरुषप्रकरण

इत्युत्तरनारायणैकवाक्यत्वाच्च, नारायणपरत्वमाह ( अद्भ्य इति 'अद्भ्यः सम्भूत' इत्यनुवाकस्य कथं नारायणपरत्वमित्यत्राह (तच्चेति 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्ता'दिति वाक्येन महापुरुषप्रकरणत्वावगमाल्लक्ष्मीपतित्वलिङ्गाच्च 'अद्भ्यः संभूत' इत्यनुवाकस्य नारायणपरत्वमित्यर्थः । 'सहस्रशीर्षा पुरुष' इत्यनुवाकस्य कथं नारायणपरत्वं पुरुषशब्दोऽप्यन्यवाची स्यादिति चेत्, उच्यते 'सहस्रशीर्षा पुरुष इत्युपहितां पुरुषेण नारायणेन यजमान उपतिष्ठते नारायणाभ्यामुपस्थानम्, उत्तरनारायणेनादित्यमुपतिष्ठते' इत्यादिकल्पसूत्रकारनिर्देशान्नारायणपरत्वं सिद्धम् । अथर्ववेदोक्तेष्वष्टादशमहाशान्तिकर्मसु वैष्णव्यां महाशान्त्यां श्रीपुरुषसूक्तं विनियुक्तम्, 'वैष्णवं पुरुषसूक्त'मिति, 'आद्यया ऽऽवाहयेद्देवमृचा तु पुरुषोत्तममित्यादिना शौनकादिभिर्भगवत्समाराधने च विनियुज्यते, स्मृतिवचनं च 'पुरुषस्य हरेः सूक्त'मिति, सुबालोपनिषदि च 'चक्षुश्च द्रष्टव्यं

१. तै० ना० ६-१ ॥ २. तै० ना० ६-१ ॥ ३. तै० ना० ६-१ ॥

"ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति नारायण एवेति द्योतयति, अयमर्थो नारायणानुवाके प्रपञ्चितः 'सहस्रशीर्षं देव'मित्यारभ्य "स ब्रह्मा स शिवस्सेन्द्रः सोऽक्षरः परमः स्वराट्" इति सर्वेशा-

---

च नारायणः श्रोत्रं च श्रोतव्यं च नारायण'इत्यादिना नारायणात्मकत्वं सर्वस्योक्त्वा 'पुरुष एवेदं सर्वं'मिति पुरुषात्मकत्वेनोपसंहृतम्, 'सहस्रशीर्षं देवं, विश्वमेवेदं पुरुष' इति नारायणानुवाकस्थसहस्रशीर्षपुरुषशब्दाभ्यां 'सहस्रशीर्षा पुरुष' इति प्रत्यभिज्ञापिताभ्यां च तयोर्नारायणपरत्वं गम्यते । 'महादेवं महापुरुषं वाचये'दिति प्रयोगाच्च 'वेदाहमेतं पुरुषं महान्त'मिति पुरुषशब्दस्य साधारण्यशङ्का दूरोत्सारिता । एवं पुरुषशब्दस्य नारायणपरत्वं निश्चीयते, 'अम्भस्यपारे' इत्याद्यनुवाक एवोक्ताभ्यां समुद्रशायित्व—विद्युद्वर्णपुरुषत्वलिङ्गाभ्यां महापुरुषप्रकरणत्वम्, लक्ष्मीपतित्वलिङ्गान्वितोत्तरनारायणैकवाक्यत्वाच्चेदं प्रकरणं नारायणपरम्, एतदेकवाक्यत्वात् 'हिरण्यगर्भः समवर्तताग्र' इत्यादिकमपि नारायणपरमित्यर्थः । एवं नारायणस्यैव परमकारणत्वे श्रीपुरुषसूक्तादिकं प्रमाणतयोक्तम्, चतुर्मुखकारणत्वं च अर्थान्निरस्तम्, 'हिरण्यगर्भ' इत्यादीनामृचां भगवत्समाराधने हविर्निवेदने विनियोगाच्च 'हिरण्यगर्भो भूगर्भ' इति भगवति प्रयोगाच्च हिरण्यगर्भशब्दस्य नारायणपरत्वं सिद्ध्यति । अथ नारायणानुवाकमपि प्रमाणत्वेनाह (अयमर्थ इति) (प्रपञ्चित इति) न केवलं समुद्रशायित्वादिना लभ्यते, अपि तु कण्ठोक्त इत्यभिप्रायः । नारायणानुवाकः कः तत्रार्थस्य प्रपञ्चितत्वं कथमित्यत्राह (सहस्रेति) प्रपञ्चितत्वमुपपादयति (सर्वेति) इदं तावत्सर्वविद्योपास्यविशेषनिर्णयपरम्, दहरविद्याप्रकरणत्वादेव तच्छेषभूतमिति चेन्न, प्रकरणादपि बली-

खासु परतत्त्वप्रतिपादनपरानत्तर–शिव–शम्भु–परब्रह्म–परञ्ज्योतिः–परतत्त्व–परायण–परमात्मादि–सर्वशब्दान् तत्तद्गुणयोगेन नारायण एव प्रयुज्य तद्व्यतिरिक्तस्य समस्तस्य तदायत्ततां

---

यस्मा वाक्यप्रमाणेन सर्वविद्याशेषत्वावगमात्, प्रकरणान्तराधीतविधानां प्रकरणान्तरस्थमिदं कथमुपास्यविशेषसमर्पकमिति चेदुच्यते– यथा प्रकरणान्तरस्थेन 'जुह्वा जुहोती'ति वाक्येन होमसाधनतया विहितामपि जुहूं प्रकरणान्तरस्थमपि 'यस्य पर्णमयी जुहू'रिति वाक्यं जुहूशब्दप्रत्यभिज्ञापितामनूद्य तस्याः पर्णमयत्वं विदधाति, जुह्वा द्रव्यविशेषस्याकाङ्क्षितत्वाद्योग्यत्वाच्च। एवं तत्तद्विद्यासूपास्यत्वेन विहितं वस्तु किमित्यपेक्षायां तत्तच्छब्दप्रत्यभिज्ञापितं तत्तदनूद्य तत्र नारायणत्वं विधीयत इत्युपपन्नमित्येतदभिप्रायेण · सर्वशाखासु इत्युक्तम् । तत्तद्गुणयोगेन तत्तच्छब्दानां नारायणवाचित्वमित्याह (तत्तदिति) 'विश्वमेवेदं पुरुष' इति सामानाधिकरण्यस्यार्थमाह ( समस्तस्येति ) तदायत्तत्व–तन्नियाम्यत्व–तच्छेषत्व–तद्व्याप्यत्वैस्तादात्म्यमित्यर्थः । तदिदमत्रैव स्पष्टम् 'व्याप्य नारायणः स्थितः', 'पतिं विश्वस्य, तद्विश्वमुपजीवति' पतित्वं शेषित्वं विश्वोपजीव्यत्वं धारकत्वेन नियमनं चार्थसिद्धम् । 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इत्यादिना नियमनेन धारकत्वश्रवणात्, तस्माद्यथोक्त एव सामानाधिकरण्यस्यार्थः, 'नारायणपरं ब्रह्मे'त्यत्र नारायणात्परमिति केचिद्वैदिका विदुः, तदयुक्तम्, महोपनिषदि 'नारायणः परं ब्रह्मे'ति पदविच्छेदेनाधीतत्वात्, 'तत्त्वं नारायणः पर' इत्यादिप्रकरणविरोधाच्च 'सुपां सुलु'गित्यादिना लुप्तविभक्तिकमिदं पदम्, समस्तत्वेऽपि निषादस्थपतिन्यायेन

तद्व्याप्यतां तदाधारतां तन्नियाम्यतां तच्छेषतां तदात्मकतां च प्रतिपाद्य ब्रह्मशिवयोरपीन्द्रादि-समानाकारतया तद्विभूतित्वं च प्रतिपादितम्। इदं च वाक्यं केवलपरतत्त्वप्रतिपादनैकपरम्, अन्यत् किञ्चिदप्यत्र न विधीयते। अस्मिन्वाक्ये

---

प्रथमाविभक्त्यर्थत्वमेव न्याय्यम्। लैङ्गे च— 'अहमेव परं ब्रह्म परं तत्त्वं पितामहः। अहमेव परं ज्योतिः परमात्मा त्वहं विभुः' इति भगवद्वचनाच्च प्रथमार्थः। 'स ब्रह्मा स शिव' इति सामानाधिकरण्यस्यार्थमाह। (ब्रह्मेति) इन्द्रादीत्यादिशब्देन 'परमस्वरा'डिति मुक्तसामानाधिकरण्यम् 'विश्वमेवेदं पुरुष' इति विश्वजगत्सामानाधिकरण्यं च विवक्षितम्। इन्द्रसामानाधिकरण्यं मुक्तसामानाधिकरण्यं विश्वजगत्सामानाधिकरण्यं च हि विभूतित्वकृतम्, तद्वदेव ब्रह्मशिवसामानाधिकरण्यं चेत्यर्थः। 'परमस्वरा'डिति मुक्तात्मोच्यते, तत्र परमशब्देन कैवल्यमोक्षव्यावृत्तिः। यद्वा जीवस्यावस्थासु सर्वासु ततः परं निरतिशयावस्थान्तरं नास्तीति परमशब्दार्थः, ननु एतदनुवाक्यजातं शम्भुशिवादिशब्दानुगुण्येन नेयम्, न त्वितरानुगुण्येन तेषां नेयत्वमिति शङ्कायां वैषम्यमाह (केवलेति) अत्रानुवाके कस्यचिदर्थान्तरस्य विधानादर्शनादिदमनन्यपरमुपास्यविशेषैकनिर्णयपरमित्यर्थः। अन्यानि त्वन्यपराणीत्याह (अस्मिन्निति) यथा 'यस्य पर्णमयी जुहू'रिति वाक्ये पर्णमयत्वेनोक्तस्य 'जुह्वा जुहोती'ति होमसाधनत्वविधिस्तथाऽत्र सर्वस्मात्परत्वेनोक्तस्य नारायणस्य 'ब्रह्म विदाप्नोती'त्यादिषु मुमुक्षूपास्यत्वविधिरित्यर्थः। 'दहरं विपाप्म'मित्यादिना पूर्वानुवाकोक्तस्यार्थस्य 'पद्मकोशप्रतीकाश'मित्यत्र प्रतिपादितत्वाद्दहरोपासनै-

प्रतिपादितस्य सर्वस्मात् परत्वेनावस्थितस्य ब्रह्म-
णो वाक्यान्तरेषु "ब्रह्मविदाप्नोति पर"मित्यादिषू-

परमिति चेत्, दहरविद्यायाः प्रकृताया उपास्यविशेषाकाङ्क्षायां न केवलमस्यामेवोपास्यो नारायणः, अपि तु सर्वासु विद्यासु स एवो-पास्य इति दहरविद्याप्रसङ्गेन सर्वविद्योपास्यविशेषनिर्णय एवात्र क्रियत इति वाक्यप्रमाणावगतत्वात्सर्वविद्याशेषभूतम् । तत्र दह-रविद्यायामप्युपास्योऽनेन निर्णीतो भवति, तत्र पूर्वप्रस्तु-'दहरं विपाप्म'मित्यादौ वक्तव्यांशसद्भावात्तदत्रोक्तमिति नात्रोपा-सनविधिपरत्वम् । एवं स्वपक्षसाधनत्वेन कारणवाक्यानि श्रीपुरुष-सूक्तं नारायणानुवाकवाक्यं चोदाहृतम् । अयं क्रमो भगवद्यामुना-चार्यानुरोधेन कृतः, तत्प्रणीते स्तोत्रे 'नावेक्षसे' इत्यादिना कारण-वाक्यानि विवक्षितानि, 'वैदिकः क' इत्यनेन श्रीपुरुषसूक्तं विवक्षि-तम्, वैदिको—वेदाध्यायी, 'इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते' इति वचनात्, न हि कश्चिदपि वैदिकः श्रीपुरुषसूक्तानध्यायीति वैदिक-शब्दाभिप्रायः, एवं—'ब्रह्मा शिवः शतमख' इति नारायणानुवाको-पसंहारवाक्यस्मारणेन नारायणानुवाको विवक्षितः, नारायणेति संबुद्ध्या नारायणानुवाकं स्मारयन् कारणवाक्यानां श्रीपुरुषसूक्तस्य च नारायणपरत्वं सूचयति, अतस्तदनुरोधेन अयं क्रम उक्तः । अत्र कठ-वल्ल्यादिश्रुतयोऽप्यनुसंधेयाः, कठवल्ल्यां 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्र-हेण ब्रवीम्योमित्येतत्' इत्यारभ्य 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति ह्युक्तम् । एवं 'सर्वे वेदा यत्पदमामनन्ती'ति सर्ववेदवेद्य-वस्तुकथनोपक्रमेण अनन्यपरं हि तत्प्रकरणम् । तथा मैत्रायणीयोपनि-षदि च 'एवं सवितुर्वरेण्यं ध्रुवमचलममृतं विष्णुसंज्ञं सर्वाधा-मे'ति ध्रुवत्वाचलत्वादिविशिष्टतया वेदान्तोदितस्य वस्तुनो विष्णु

पासनादि विधीयते।

अतः [1]"प्राणं मनसि सह करणै"रित्यादिवाक्यं सर्वकारणे परमात्मनि करणप्राणादिं सर्वं विकारजातमुपसंहृत्य तमेव परमात्मानं "सर्वस्येशानं ध्यायीते"ति परब्रह्मभूतनारायणस्यैव ध्यानं विदधाति। [2]"पतिं विश्वस्ये"ति [3]"न तस्येशे

संज्ञत्वं विधीयते।

अथ पूर्वपक्षे उदाहृतश्रुतीर्व्याचष्टे (अत इत्यादिना) अतः कारणवाक्यैः श्रीपुरुषसूक्तेन अनन्यार्थनारायणानुवाकादिभिश्च नारायणस्य परमकारणत्वेन प्रतिपन्नत्वाद् ब्रह्मशिवयोस्तत्संज्ञत्व-तत्संहार्यत्वादिश्रवणाचेत्यर्थः। प्राणमित्यादिश्रुतेरर्थं संग्रहेणाह (सर्वकारणेति) उपसंहृत्य–परमात्मनि विकारजातोपसंहारमनुसन्धायेत्यर्थः, (सर्वस्येशानं ध्यायीतेति) 'सर्वस्य वशी'ति पूरकवाक्यान्वयप्रदर्शनम्, तदर्थमाह (परेति) ईशानत्वादिकं नारायणस्यैव मुख्यमितीशानादिशब्दास्तस्यैव वाचका इत्याह (पतिमिति) सर्वैश्वर्य इत्यादिवाक्यस्यार्थमाह (अत इति) 'विश्वाख्यं विश्वशम्भुवम्' इति नारायणवाचित्वेन शम्भुशब्दस्य प्रयोगदर्शनात् 'शम्भुः स्वयंभूर्द्रुहिण' इत्यर्थान्तरविषयत्वेन निघण्टुदर्शनाच्चेति भावः। 'शम्भुराकाशमध्ये ध्येय' इति वाक्ये कारणत्वमपि विधेयं स्यादित्यत्राह–(कश्चेति) कारणत्वानुवादेन ध्येयताविधिपरमिदं वाक्यं प्रतीयते 'कश्च ध्येयः' 'कारणं तु ध्येय' इति प्रश्नप्रतिवचनाभ्याम्, न हि किं कारणमित्यस्य प्रश्नस्येदङ्कारणमिति प्रतिवचनं श्रूयते, तस्मात् कारणत्वानुवादेन ध्येयत्वं विधीयत इति निश्चीयते। कारणत्वानु-

१. अथ० शिरोप० ॥ २. तै० ना० ६–११ ॥ ३. तै. ना० ६-१-९ ॥

कश्चन" इति च तस्यैव सर्वस्येशानता प्रतिपादिता। अत एव "सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येयः" इति नारायणस्यैव परमकारणस्य शम्भुशब्दवाच्यस्य ध्यानं विधीयते. "कश्च ध्येय" इत्यारभ्य "कारणं तु ध्येय" इति कार्यस्याध्येयतापूर्वककारणैकध्येयतापरत्वाद्वाक्यस्य, तस्यैव नारायणस्य परमकारणता शम्भुशब्दवाच्यता च परमकारणप्रतिपादनैकपरे नारायणानुवाक एव प्रतिपन्नेति तद्विरोध्यर्थान्तरपरिकल्पनं कारणस्यैव ध्येयत्वेन विधिवाक्ये न युज्यते। यदपि "ततो यदुत्तरतर"मित्यत्र पुरुषा-

---

वादश्च तत्प्रतिपादकवाक्यान्तरसापेक्षः, अतस्तदानुगुण्येन अनुवादः कर्तव्य इति अनुवादरूपत्वात् कारणस्यैव ध्येयत्वविधिरित्यर्थः। अनुवादरूपत्वमस्तु, तथाऽपि शिव एव कारणत्वेनानूद्यतामित्यत्राह (तस्यैवेति) (परमकारणता शम्भुशब्दवाच्यता चेति) अयमभिप्रायः— अनुवादरूपत्वेन वाक्यान्तरसापेक्षत्वात् तद्विरुद्धार्थप्रतिपादनायोगात् नारायणस्यैव ध्येयत्वविधिः। कारणत्वं विधीयतां नाम, तथाऽपि सद्ब्रह्मात्मादिशब्दवच्छम्भुशब्दस्य सामान्यशब्दत्वान्नारायण एव पर्यवसानं न्याय्यमिति, शिवादिशब्दानां नारायणशब्दापेक्षया साधारणत्वाद्बह्वीपूपनिपत्सु नारायणादिशब्दनिर्देशात् तत्रापि कैकत्र नारायणशब्दाभ्यासाच्च तदानुगुण्येनार्थो वर्णनीय इति चानुसन्धेयम्। 'ततो यदुत्तरतर'मित्यादिश्रुतेरर्थमाह (यदपीत्यादिना)

दन्यस्य परतरत्वं प्रतीयत इत्यभ्यधायि, तदपि "यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" यस्मादपरं यस्मादन्यत् किञ्चिदपि परं नास्ति, केनापि प्रकारेण पुरुषव्यतिरिक्तस्य परत्वं नास्तीत्यर्थः, अणीयस्त्वम्—सूक्ष्मत्वम्, ज्यायस्त्वम्—सर्वेश्वरत्वम्, सर्वव्यापि-

---

तदपि प्रत्युक्तमित्यन्वयः, 'ततो यदुत्तरतर'मिति वाक्यात्पूर्वं यस्मात्परमित्यादिवाक्यान्तरस्यार्थं वक्तुमन्वयमाह (यस्मादपरमिति) यस्मादिति पञ्चम्यन्तपदेन परशब्दस्यान्वये सति समनिषेधो न कृतः स्यात्, अपरशब्देन पञ्चम्यन्तपदस्यान्वये सति समाभ्यधिकोभयनिषेधः कृतः स्यात्, तथा सति 'नान्यः पन्था' इति पुरुषवेदनस्यैव मोक्षोपायत्वप्रतिज्ञानस्य प्राकरणिकस्याप्यानुगुण्यम्, पञ्चम्यन्तपदस्यान्यशब्देनान्वयश्च श्रुतिस्मृतिषु दृश्यते 'इति नेत्येतस्मादन्यत्परमस्ति, तस्माद्धान्यन्न परं किञ्चनास एकः समस्तं यदिहास्ति किञ्चित्, तदच्युतो नास्ति परं ततोऽन्य'दित्यादिषु 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुत्यैकार्थ्यं च । यस्मात्परमित्यन्वयेऽपि पुरुषादन्यस्य परत्ववादोऽनुपपन्न एव । कैश्चिदेवं व्याख्यातम्, परमित्युत्कृष्टनिषेधः अपरमिति समनिषेध इति, तदयुक्तम्— अन्यपर्यायस्यापरशब्दस्य समवाचित्वाभावात्, समानविभक्त्यन्तपदयोः स्वतःप्राप्तसामानाधिकरण्यभङ्गात् व्यधिकरणत्वेसू मकचशब्दाद्यभावाच्च तस्माद्यथोक्त एवार्थः । 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चि'दित्येतद्व्याचष्टे (अणीयस्त्वमिति) (ज्यायस्त्वमिति) ज्यायस्त्वं व्यापकत्वं नियन्तृत्वादिगुणैरुत्कृष्टत्वम्, अत्र च नियन्तृत्वेन ज्यायस्त्वं विवक्षितम्, 'प्रशासितारं सर्वेषामणीयांसमणीयसा'मित्यादिवचना-

त्वात् सर्वेश्वरत्वादस्य, एतद्व्यतिरिक्तस्य कस्याप्यणीयस्त्वं ज्यायस्त्वं च नास्तीत्यर्थः । [१]"यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" इति पुरुषादन्यस्य कस्यापि ज्यायस्त्वं निषिद्धमिति तस्मादन्यस्य परत्वं न युज्यते इति प्रत्युक्तम्, कस्तर्ह्यस्य वाक्यस्यार्थः ? अस्य प्रकरणस्योपक्रमे [२]"तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये"ति पुरुषवेदनस्यामृतत्वहेतुतां तद्व्यतिरिक्तस्यापथतां च प्रतिज्ञाय— [३]"यस्मात् परं नापरमस्ति किञ्चित्—तेनेदं पूर्णं पुरुषेण सर्वम्" इत्येतदन्तेन पुरुषस्य सर्वस्मात् परत्वं प्रतिपादितम् । यतः पुरुषतत्त्वमेवोत्तरतरं ततो यदुत्तर-

---

नुसारात्, 'यस्मात्परं नापर'मित्यादिवाक्ये पुरुषादन्यस्य परत्वनिषेधात् तद्विरुद्धं तदन्यस्याधिकत्वप्रतिपादनपरत्वं व्याहतमित्यर्थः । 'यस्मात्पर'मिति वाक्ये परत्वनिषेधो वक्ष्यमाणपरव्यतिरिक्तविषयः गोबलीवर्दन्यायादिति शङ्कायाम् अनन्यथासिद्धस्यैव सङ्कोचकत्वात् 'ततो यदुत्तरतर'मिति वाक्यस्य चान्यथासिद्धत्वात् 'यस्मात्पर'मिति वाक्ये परशब्दो न सङ्कोचयितव्य इति सिद्धान्तिनो मतमभिप्रेत्य अस्य वाक्यस्य अन्यथा निर्वाहः कथमित्याह ( कस्तर्हीति ) अस्यार्थं वक्तुं प्रकरणं योजयति ( अस्येति ) उक्तप्रकरणवाक्यानुगुण्येन 'ततो यदुत्तरतर'मिति वाक्यस्यार्थमाह ( यत इति ) अरूपम्—कर्मकृतप्रकृतिसम्बन्धरहितम् । अनामयम्—तत्कृतसुखदुःखादिरहितमित्यर्थः ।

---

१. श्वे० ३-९ ॥ २. श्वे० ३-८ ॥ ३. श्वे० ३ ॥

तरं पुरुषतत्त्वं तदेवारूपमनामयम्, "य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति" इति पुरुषवेदनस्यामृतत्वहेतुत्वं तदितरस्य चापथत्वं प्रतिज्ञातं सहेतुकमुपसंहृतम्, अन्यथोपक्रमगतप्रतिज्ञाभ्यां विरुध्यते, पुरुषस्यैव शुद्धिगुणयोगेन शिवशब्दाभिधेयत्वम् 'शाश्वतं शिवमच्युत'मित्यादिना ज्ञातमेव, पुरुष एव शिवशब्दाभिधेय

---

तत इति पञ्चम्यन्तपदं हेत्वर्थपरत्वेन योजितम् । अन्यथा दूषणमाह (अन्यथेति) उपक्रमगतप्रतिज्ञाभ्यां– पुरुषवेदनस्य मुक्तिहेतुत्वप्रतिज्ञया तदन्यस्यानुपायत्वप्रतिज्ञया चेत्यर्थः । हेत्वर्थत्वाभावेऽपि न पुरुषादन्यत्वसिद्धिः, प्रथमानिर्दिष्टस्य शाब्दप्राधान्यं वैयाकरणन्यायसिद्धमिति 'पुरुषेण सर्व'मिति सर्वशब्दार्थस्य जगतः प्रथमानिर्दिष्टत्वादव्यवहितत्वाच्च तच्छब्दस्य तत्परामर्शित्वस्यैव युक्तत्वात्तत इति पदेन 'तेनेदं पूर्णं पुरुषेण सर्व'मिति प्रथमानिर्दिष्टं जगद् गृहीतम् इति जगत उत्तरः परः पुरुष एवाभिधीयत इति केचिदाचार्याः, तच्चोपपन्नम्, एवमुपक्रमगतप्रतिज्ञानुरोधेन यस्मात्परमित्यादिवाक्यकृताधिकनिषेधानुरोधेन च 'ततो यदुत्तरतर'मिति वाक्यं पुरुषस्यैव परत्वपरमुक्तम्। 'सर्वाननशिरोग्रीव' इत्यादिवाक्यावगतस्य शिवशब्दस्यार्थमाह (पुरुषस्यैवेति) आदिशब्देन 'सर्वः शर्वः शिवः स्थाणुः, शिवं कर्मास्तु' इत्यादिप्रयोगो विवक्षितः, सर्वाननशिरोग्रीवत्वं च 'सहस्रशीर्षा पुरुष' इत्यस्य प्रत्यभिज्ञापकम्, भगवच्छब्दस्तु पुरुषज्ञापक इत्यनुसन्धेयम् । उत्तरत्रापि पुरुषप्रतिपादनाच्छिवशब्दः पुरुषपर इत्याह (पुरुष इति) 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः' इत्यत्र एषः– इति पदेन

इत्यनन्तरमेव वदति– [1]"महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" । इति ।

उक्तेनैव न्यायेन [2]"न सन्न चासच्छिव एव केवल" इत्यादि सर्वं नेयम् । किञ्च 'न तस्येशे कश्चन' इति निरस्तसमाभ्यधिकसम्भावनस्य पुरुषस्याणोरणीयानित्यस्मिन्ननुवाके वेदाद्यन्तरूपतया

शिवशब्दाभिहितः प्रत्यभिज्ञापितः, एवं कारणवाक्यबलादुपास्यविशेषनिर्णयपरनारायणानुवाकेन च नारायणस्यैव परत्वमुक्तम् ।

एवं देवतान्तरस्यापि परत्वे 'न सन्न चास'दिति कारणवाक्यं 'यः परः स महेश्वर' इत्युपास्यविशेषणनिर्णयपरवाक्यं चास्तीत्याह ( उक्तेनैवेति ) उक्तेनैव न्यायेन, कारणवाक्यैर्नारायणस्यैव परमकारणत्वप्रतिपादनादनन्यपरनारायणानुवाकादिभिस्तस्यैव सर्वस्मात्परत्वनिश्चयाद्ब्रह्मरुद्रादीनां तत्सृज्यत्वसंहार्यत्वश्रवणाच्चार्थान्तरे दृष्टप्रयोगाणां शिवमहेश्वरादिशब्दानां साधारणत्वात्तेषां नारायणपरत्वेन प्रयोगदर्शनाद्ब्रह्मीपूपनिषत्सु नारायणादिशब्दनिर्देशादेकैकस्यैवोपनिषदि नारायणादिशब्दाभ्यासाच्च शिवादिशब्दोऽपि सद्ब्रह्मादिशब्दवत् नारायणपर्यवसायीत्यर्थः । तत्र 'यद्वेदादौ स्वर' इत्यादिवाक्यस्य न केवलं प्रकरणान्तरवाक्यैर्नारायणपरत्वनिश्चयः अपि तु तस्यैव पूर्वापरपर्यालोचनया च नारायणपरत्वं गम्यत इत्याह ( किञ्चेति ) अस्य वाक्यस्य पुरुषादन्यस्योत्कर्षपरत्वं प्रथमानुवाकोक्तपुरुषव्यतिरिक्तपरत्वनिषेधव्याहतमिति दर्शयितुं 'न तस्येशे' इत्याद्युक्तम्, 'यद्वेदादा'वित्यस्यार्थमाह ( वेदाद्यन्तेति ) वेदस्य प्रणवं उत्पादकत्वादादिस्तल्लयस्थानत्वादन्तश्चेत्यभिप्रायेण वेदाद्यन्त

१. श्वे० ३-१२ ॥ २. श्वे० ४-३-५ ॥

वेदबीजभूतप्रणवस्य प्रकृतिभूताकारवाच्यतया महेश्वरत्वं प्रतिपाद्य दहरपुण्डरीकमध्यस्थाकाशान्तरवर्तितयोपास्यत्वमुक्तम्।

अयमर्थः—सर्वस्य वेदजातस्य प्रकृतिः प्रणव उक्तः, प्रणवस्य च प्रकृतिरकारः, प्रणवविकारो वेदः, स्वप्रकृतिभूते प्रणवे लीनः, प्रणवोऽप्यकारविकारभूतः, स्वप्रकृतावकारे लीनस्तस्य प्रणव-

---

रूपतयेत्युक्तम्, अत एव वेदबीजभूतः प्रणवः, तस्य प्रकृतिलीनस्येति पदे व्याचष्टे (प्रकृतिभूताकारवाच्यतयेति) प्रकृतिलीनत्वं नाम प्रकृतिभूताकारावस्थत्वम्। अकारावस्थप्रणववाच्यत्वं नामाकारवाच्यत्वमेवेत्यर्थः। 'अकारेणोच्यते विष्णुः सर्वलोकेश्वरो हरिः'। 'अकारो विष्णुवाचक' इति श्रुतिस्मृतिवचनादकारवाच्यस्य नारायणस्यैव महेश्वरत्वमुक्तमित्यर्थः। (दहरेति) यद्वेदादिविति वाक्ये देवतान्तरस्य परत्वंकथनाच्चदेव दहरपुण्डरीकान्तरुपास्यमिति चेत् तत्रापि नारायणस्यैव महेश्वरत्वप्रतिपादनात्स एव दहरपुण्डरीकेऽप्युपास्य इत्यर्थः।

अस्मिन् वाक्ये प्रणववेदयोरकारप्रणवयोश्च प्रकृतिविकृतिभावः कथमवगतः? अकारप्रसङ्गश्च कः? तद्वाच्यत्वपरः शब्दः कः? इत्यपेक्षायामाह (अयमर्थ इति) 'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठित' इत्यनेनैव प्रकृतिविकृतिभावः सिद्धः, प्रकृतिलीनस्येत्यनेन अकारश्चावगतः, 'यः पर' इति परशब्देन वाच्यत्वं चावगतम्, 'इदं परस्तात् परः' इत्यादिषु परशब्दस्य वाच्यत्वार्थत्वादित्यर्थः। तर्ह्यकारस्य पर इति वक्तव्यं प्रकृतिलीनस्येति वचनव्यक्तेः कोऽभिप्रायः?। अकारवाच्यस्यैव महेश्वरत्वे कथं नारायणस्य परत्वसिद्धिरित्यत्राह

प्रकृतिभूतस्याकारस्य यः परो वाच्यः स एव महेश्वर इति सर्ववाचकजातप्रकृतिभूताकारवाच्यः सर्ववाच्यजातप्रकृतिभूतनारायणो यः स महेश्वर इत्यर्थः ।

यथोक्तं भगवता— [1]"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय!" [2]"अक्षराणामकारोस्मि" इति, [3]"अ इति ब्रह्मे"ति च श्रुतेः, [4]"अकारो वै सर्वा वाग्" इति च वाचकजातस्याकारप्रकृतित्वम्, वाच्यजातस्य ब्रह्मप्रकृतित्वं च सुस्पष्टम् । अतो ब्रह्मणोऽकारवाच्यताप्रतिपादनादकारवाच्यो नारा·

( सर्ववाचकेति ) वाच्यजातप्रकृतिभूतो वाचकजातप्रकृतिभूतेन वाच्य इति ज्ञापनं प्रकृतिलीनस्येति वचनव्यक्तेः प्रयोजनम्, वाच्यजातप्रकृतिभूतस्य नारायणत्वं वाक्यान्तरावगतमिति भावः ।

भगवतो वाच्यजातप्रकृतित्वे अकारस्य वाचकजातप्रकृतित्वे च भगवद्वचनमाह ( यथोक्तमिति ) 'अक्षराणामकारोऽस्मी'त्यनेन वाच्यवाचकभावसम्बन्धश्च लब्धः । नारायणस्य अकारवाच्यत्वे श्रुतिमाह ( अ इति ब्रह्मेति ) अकारस्य वाचकजातप्रकृतित्वेऽपि श्रुतिमाह (अकारो वै इति) वाचकजातस्य अकारप्रकृतित्वमिति ज्ञायत इत्यर्थः । ब्रह्मणो वाच्यजातप्रकृतित्वं श्रुतिसिद्धमित्याह ( वाच्येति ) उक्तं निगमयति (अत इति) एवं महेश्वरशब्दस्य साधारणत्वात्तत्प्रकरणपर्यालोचनयां च नारायणपरत्वमुक्तम्, नारायणस्यैव तत्तच्छब्दवाच्यस्य पर·

१. गी० ७-६ ॥ २. गी० ११-३३ ॥ ३. ॥ ४. ॥

यण एव महेश्वर इति सिद्धम्, तस्यैव [1]"सहस्रशीर्षं देव"मिति केवलपरतत्त्वविशेषप्रतिपादनपरेण नारायणानुवाकेन सर्वस्मात्परत्वं प्रपञ्चितम्, अनेनानन्यपरेण प्रतिपादितमेव परतत्त्वमन्यपरेषु सर्ववाक्येषु केनापि शब्देन प्रतीयमानं तदेवेत्यवगम्यत इति [2]"शास्त्रदृष्ट्या तूपदेशो वामदेववदि"ति सूत्रकारेण निर्णीतम् । तदेतत्परं ब्रह्म क्वचिद्ब्रह्मशिवादिशब्दादवगतमिति केवलब्रह्मशिवयोर्न परत्वप्रसङ्गः, अस्मिन्ननन्यपरेऽनुवाके तयोरिन्द्रादितुल्यतया तद्विभूतित्वप्रतिपादनात्, क्वचिदाका-

---

त्वमुत्तरानुवाके कण्ठोक्तमपीत्याह (तस्यैवेति) 'विश्वाधिको रुद्रो महर्षिः प्रजापतिः प्रजा असृजते'त्यादिष्वन्येष्वपि वाक्येषु शिवादेः कारणत्वमाशङ्क्याह (अनेनेति) 'विश्वाधिको रुद्र' इत्यादिवाक्यान्यपि अन्यपरत्वादुक्तार्थानुगुणत्वेन वर्णनीयानीत्यर्थः । केनापि शब्देन प्रतीयमानं तदेवास्तु, ततः किमित्यत्राह (तदेतदिति) (इन्द्रादितुल्यतयेति) आदिशब्देन विश्वमुक्तात्मविवक्षाऽस्ति । प्रसिद्धब्रह्मशिवयोः परत्वाभावे दृष्टान्तमाह (क्वचिदिति) 'विश्वाधिको रुद्र' इत्यस्यायमर्थः—अत्र 'स नो देवः शुभया स्मृत्या संयुनक्तु' इति स्वाभिमतप्रार्थनातात्पर्याद्धिरण्यगर्भं प्रति कारणत्वमनूद्यते एव, अनुवादस्य च वाक्यान्तरसापेक्षस्य तदानुगुण्येन वर्णनीयत्वात्केनचिद्गुणयोगेन रुद्रशब्दो नारायणपरः। चतुर्मुखकारणत्वं च तस्यैवेति स्पष्टं पश्यत— अपश्यत, स्वस्माज्जायमानम् इत्यध्याहारः । एवं वा योजना

---

१. तै० ना० ६-११ ॥ २. ब्र० १-१-३० ॥

शप्राणादिशब्देन परं ब्रह्माभिहितमिति भूता-काशप्राणादेर्यथा न परत्वम् ।

यत्पुनरिदमाशङ्कितम् [1]"अथ यदिदमस्मि-न्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव वि-जिज्ञासितव्य"मिति, अत्राकाशशब्देन जगदु-पादानकारणं प्रतिपाद्य तदन्तर्वर्त्तिनः कस्यचि-त्तत्त्वविशेषस्यान्वेष्टव्यता प्रतिपाद्यते । अस्या-

रुद्रशब्दः प्रसिद्धरुद्रपर एव, स च महर्षिः त्रिकालज्ञानवत्तया सर्वो-त्कृष्टः, स स्वकारणभूतं हिरण्यगर्भमपि कालत्रयज्ञानवत्तया जायमा-नावस्थमपश्यत् । य एवमपश्यत्स शुभया स्मृत्या भगवत्स्मरणेन न संयुनक्त्वित्यर्थः, 'ईश्वराज्ज्ञानमन्विच्छेत्, उपास्योऽहं सदा विप्रा उपायोऽस्मि हरेः स्मृतौ । शङ्करस्य तु यो भक्तःसप्तजन्मान्तरं नरः तस्यैव तु प्रसादेन विष्णुभक्तः स जायते' इत्यादिभी रुद्रस्य भगव-ज्ज्ञानप्रदत्वप्रतिपादनात्, हिरण्यगर्भकारणत्ववादिनः प्रष्टव्याः किम-ण्डान्तर्वर्तिसृष्टिः 'प्रजापतिः प्रजा असृजते'त्युच्यते ? उत परमका-रणत्वमुच्यते ? इति, प्रथमकल्पोऽभ्युपेतः । द्वितीयस्तु प्रजापत्या-दिशब्दानां साधारणत्वादन्यत्र च चतुर्मुखादेः सृज्यत्वादिश्रवणाद् बहुकारणवाक्याविरोधेन नेय इति प्रत्युक्त इति ।

अथ व्योमातीतवादं हृदि निधाय तं समूलमुन्मूलयितुं तत्परिपाटी-मुपन्यस्यति ( यत्पुनरिति ) आकाशान्तर्वर्त्तिनः कस्यचिदन्वेष्टव्य-स्यात् ततः किमित्यत्राह ( अस्येति ) एतत्प्रतिक्षिपति ( अनधीतेति

१. छां० ८-१-१ ॥

काशस्य नामरूपयोर्निर्वाहकत्वश्रवणात्पुरुषसूक्ते पुरुषस्य नामरूपयोः कर्तृत्वदर्शनाच्चाकाशपर्यायभूतात्पुरुषादन्यस्यान्वेष्टव्यतयोपास्यत्वं प्रतीयत इति। अनधीतवेदानामदृष्टशास्त्रविदामिदं चोद्यम्। यतस्तत्र श्रुतिरेवास्य परिहारमाह; वाक्यकारश्च "दहरोऽस्मिन्नन्तराकाशः किं तत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्" इति चोदिते "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इत्यादिना अस्याकाशशब्दवाच्यस्य परमपुरुषस्यानवधिकमहत्त्वं सकलजगत्कारणतया सकलजगदाधारत्वं च प्रतिपाद्य 'तस्मिन्कामास्समाहिता' इति अपहतपाप्मत्वादिसत्यकामशब्देन सत्यसङ्कल्पत्वपर्यन्तगुणाष्टकं निहितमिति परमपुरुषवत्परमपुरुषगुणाष्टकस्यापि

( अनधीतवेदानामदृष्टशास्त्रविदामिदं चोद्यमिति ) दहरविद्यायाः पूर्वापरवाक्यमप्यनधीतम्, वाक्यकारग्रन्थादयश्चादृष्टास्तैरिति भावः। कथमित्यत्राह ( यत इति ) कथं श्रुतिरेव परिहरतीत्यत्राह ( दहरोऽस्मिन्निति ) ( अस्याकाशशब्दवाच्यस्येति ) वक्ष्यमाणगुणानां तगाकाशान्तर्वर्तिस्वतन्त्रवस्त्वन्तर्गतमिति शङ्काशमनाय 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इति वाक्यस्याकाशशब्देन पूर्वोक्त आकाशशब्दः स्मारितः, स्पष्टम्।

ननु किं तत्र विद्यत इति चोद्यानन्तरम् 'उभे अस्मिन् द्यावापृथिवी

पृथग्विजिज्ञासितव्यत्वप्रतिपिपादयिषया "तस्मिन् यदन्तस्तदन्वेष्टव्य"मित्युक्तमिति श्रुत्यैव सम्यक् परिहृतम् । एतदुक्तं भवति— किं तदत्र विद्यते यदन्वेष्टव्यमित्यस्य चोद्यस्यास्मिन्सर्वस्य जगतः स्रष्टृत्वमाधारत्वं नियन्तृत्वं शेषित्वमपहतपाप्मत्वादयो गुणाश्च विद्यन्त इति परिहार इति। तथा च वाक्यकारवचनम्— 'तस्मिन् यदन्तरिति कामव्यपदेश' इति। काम्यन्त इति कामाः अपहतपाप्मत्वादयो गुणा इत्यर्थः । एतदुक्तं भवति- यदेतद्दहराकाशपदवाच्यं निखिलजगदुदयविभवलयलीलं परं ब्रह्म, तस्मिन् यदन्तर्निहितमन

अन्तरेव समाहिते' इत्यादिना द्यावापृथिवीविद्युन्नक्षत्रादीनामाकाशवर्तित्वं प्रतीयत इति न गुणजातस्य प्रतीतिरिति शङ्कायामाह (एतदुक्तं भवतीति) उक्तद्युपृथिव्यादीनां स्रष्टृत्वधारकत्वादिगुणगणोऽपहतपाप्मत्वादिगुणगणश्च विवक्षित इत्यर्थः । कथं वाक्यकारेण परिहृतमित्यत्राह (तथा चेति) 'काम्यस्पृहास्मराः कामा' इति निघण्टुः । गुणिव्यतिरेकेण कथं गुणानामुपास्यत्वमिति शङ्कायामाह (एतदुक्तमिति) उभयमप्यन्वेष्टव्यं तच्छब्दनिर्दिष्टस्यैवान्वेष्टव्यत्वान्नोभयमिति चेन्न, तच्छब्द उभयपरो नेयः। यच्छब्दनिर्दिष्टं गुणाष्टकमेवेति तच्छब्दो गुणमात्रपर इति चेन्न, तच्छब्द एवोभयपरः । ननु य आकाशः यद्गुणजातमिति पुलिङ्गनपुंसकलिङ्गरूपयच्छब्दद्वयं स्यात्तदत्र नास्तीति चेत्, 'त्यदादीनि सर्वैर्नित्य'मिति त्यदादीनामेकशेषत्वविधानात्तदन्यतमयच्छब्दस्यैकशेषे

वधिकातिशयमपहतपाप्मत्वादिगुणाष्टकं तदुभय-मप्यन्वेष्टव्यं विजिज्ञासितव्यमिति, यथाऽऽह-[1]"अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्या-न्कामाँस्तेषां सर्वेषु लोकेषु कामचारो भवति"

त्वमवगम्यते, 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या'मिति सूत्रेण नपुंसकानपुंसकसंनिपाते नपुंसकस्यैकशेषत्वं विकल्पेनैकवद्भावश्च विधीयत इति, अत्र यो यदिति पुँल्लिङ्गनपुंसकरूपयच्छब्दद्वयोपनिपाते यदिति नपुंसकस्यैकशेष्यमेकवद्भावश्चेति निश्चीयते, तस्माद्यच्छब्देनोभयं विवक्षितमिति, निखिलजगदुदयेत्यादिविशेषणम्, 'आकाशो ह वै नामरूपयोर्निर्वहिते'ति श्रुत्युक्तस्मारणम्। ननूभयस्यान्वेष्टव्यत्वे प्रामाणिके सति हि यच्छब्दस्यैवं निर्वाहः कार्य इत्यत्राह ( यथाऽऽहेति ) छान्दोग्ये आकाशशब्दस्य परमात्मपरत्वमाश्रित्य हि सर्वत्राकाशशब्दानां परमात्मपरत्वमापाद्य तदन्तर्वर्तिनः स्वतन्त्रवस्त्वन्तरत्वं व्योमातीतवादिभिरुच्यते, अत्र छान्दोग्यश्रुतिनिर्वाहात्तेषां मूलघातः कृत इत्यभिप्रायेणैतावता विरतिः, यत्राकाशशब्दनिर्दिष्टस्य परमात्मासाधारणगुणश्रवणम्, तत्र स्वारस्यभङ्गेनाकाशशब्दस्य परमात्मपरत्वमाश्रीयते। अन्यत्र तु प्रसिद्धिप्राचुर्यात्स्वतः प्राप्त एवार्थः स्वीकृत इत्यर्थः, अनेन 'तत्रापि दहूं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्य'मित्यत्र विशोकशब्देन 'विशोको विजिघत्सोऽपिपिपास' इत्यादिसमानप्रकरणोक्तगुणस्मारणात्तदन्तर्वर्तिनो गुणजातस्यान्वेष्टव्यत्वं प्रसिद्धम्, तस्याकाशशब्दनिर्दिष्टस्याकारवाच्यत्वान्नारायणस्य महेश्वरत्वमुक्तम् 'यद्वेदादा'विति, यत्र स्वाकाशशब्दनिर्दिष्टस्य परमात्मासाधारणगुणाश्रवणम्, तत्राकाशशब्दस्य प्रसिद्धार्थपरत्वात्तदन्तर्वर्तिनो नारायणत्वं स्यादिति च

१. छा० ८-१-६॥

इति । यः पुनः कारणस्यैव ध्येयताप्रतिपादनपरे वाक्ये विष्णोरनन्यपरवाक्यप्रतिपादितपरतत्त्वभूतस्य कार्यमध्ये निवेशः, स स्वकार्यभूततत्संख्यापूरणं कुर्वतः स्वलीलया जगदुपकाराय स्वेच्छावतार इत्यवगन्तव्यः, यथा लीलया देवसंख्यापूरणं कुर्वत उपेन्द्रत्वं परस्यैवं । यथा च सूर्य-

---

स्थितम् । अथ 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते' इति विष्णोः कार्यत्वश्रवणात् परत्ववैकल्यशङ्कां व्युदस्यति ( यः पुनरिति ) ( कारणस्य ध्येयताप्रतिपादनपरे वाक्य इति ) 'कश्च ध्येयः कारणं तु ध्येयः' इति कारणत्वानुवादेन ध्येयताविध्यनन्यपरत्वाद्वाक्यान्तरसापेक्षोऽनुवादः तदानुगुण्येन स्यादित्यनन्यपरवाक्योक्तं नारायणस्यैव परत्वं स्थितम्, तस्य स्वेच्छया लोकरक्षणार्थमवतार इति श्रुतिस्मृतिपूक्तम्, तत्र 'बहूनि मे व्यतीतानि जन्मानि तव चार्जुने'ति वचनादुत्पत्तिसद्भावो ब्रह्मरुद्रादेर्भगवतश्चाभ्युपगम्यते, तत्र भगवज्जन्मनो हेतुः प्रयोजनं च विलक्षणं प्रमाणान्तरेण प्रतिपन्नमिति तदविरोधेनात्रापि प्रतिपाद्यमानं भगवतो जन्म विलक्षणहेतुमद्विलक्षणप्रयोजनवच्चाभ्युपगम्यम्, अन्येषां जन्मनो हेतुफले कर्मतत्फलानुभवौ, तस्माद्रामादिवदवतार इत्यर्थः., त्रिमूर्तिसंख्यान्तर्भावमात्रं न साम्ये प्रयोजकमित्यभिप्रायेण संख्यापूरणं कुर्वत इति मुहुरुक्तम्, स्वलीलया जगदुपकारायेति हेतुप्रयोजनवैलक्षण्यमुक्तम्, न तु कर्मणा तत्फलानुभवायेत्यर्थः, 'जगतामुपकाराय न सा कर्मनिमित्तजे'ति वचनात् । मनुष्यादिषु स्ववतारः कथं देवेष्विति शङ्काव्यावृत्त्यर्थमाह ( यथा लीलयेति ) तर्हि देवेष्ववतारद्वयं कथमित्यत्राह ( यथा चेति ) स्वसमानगणनागययत्वरूपोत्कर्षं प्रति

वंशोद्भवराजसंख्यापूरणं कुर्वतः परस्यैव ब्रह्मणो दाशरथिरूपेण स्वेच्छावतारः, यथा च सोमवंशसंख्यापूरणं कुर्वतो भगवतो भूभारावतरणाय स्वेच्छया वसुदेवगृहे अवतारः। सृष्टिप्रलयप्रकरणेषु नारायण एव परमकारणतया प्रतिपाद्यत इति पूर्वमेवोक्तम्। यत्पुनरथर्वशिरसि रुद्रेण

---

ददातीत्यभिप्रायेण सोमवंशसङ्ख्यापूरणं राजसङ्ख्यापूरणमित्युक्तम्, तद्वत् त्रिमूर्त्यन्तर्भावो न तत्साम्यायेत्यभिप्रायः। परत्वे प्रामाणिके सति कथं निर्वाह इत्यत्राह (सृष्टीति) अथाऽथर्वशिरो निर्वहति (यत्पुनरिति) 'देवा ह वै स्वर्गं लोकमगमन् ते देवा रुद्रमपृच्छन् को भवानिति सोऽब्रवीत् अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति सोऽन्तरादन्तरं प्राविशद्दिशश्चान्तरं प्राविशत्सोऽहं नित्यानित्यो ब्रह्माहं ब्रह्मे'त्यादि, 'सोऽन्तरादन्तरं प्राविशत्' इत्यतः पूर्वं 'सोऽब्रवी'दिति प्रक्रम्य रुद्रवचः, अस्य वाक्यस्योपर्यपि सोऽहमित्यादिकं रुद्रवचः, अतो मध्येऽपि रुद्रवाक्यं न समाप्तमित्यभिप्रायेण प्रपञ्चितमित्युक्तम्, अत्रेदं विचार्यते 'सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं प्राविशदितीदं किं रुद्रवाक्यम्? उत केवलं श्रुतिवाक्यम्? पूर्वमितिकरणेन रुद्रवचसः समाप्तत्वादिदं श्रुतिवाक्यमिति चेन्न, सोऽहमित्यादेरुपर्यपि रुद्रवाक्यस्य दर्शनादिदमपि रुद्रवाक्यमेव। नो चेत् 'सोऽब्रवी'दित्युत्तरत्र अध्याहारः स्यात्, न स दोष इतिकरणावैयर्थ्यादर्थवत्त्वादिति चेन्न, न हीतिकरणस्य समाप्तिरेवार्थः, अपि तु हेतुः प्रकारोऽप्यर्थः', 'इति हेतुप्रकरणप्रकारादिसमाप्ति'ष्विति निघण्टुदर्शनात्, तस्मात्पदान्तरानध्याहारेणैव निर्वाहे सम्भवत्यध्या-

स्वसर्वैश्वर्यं प्रपञ्चितम्, तत् १"सोऽन्तरादन्तरं

हारसापेक्षार्थस्वीकारोऽनुपपन्नः, तस्मादयमर्थः—रुद्रेण को भवानिति पृष्टेन प्रथमं 'अहमेकः प्रथममासं वर्तामी'त्यादिना स्वस्य सर्वात्मकत्वे उक्ते परमात्मनो हि सर्वात्मकत्वं ? कथं तद्भवतः ? इत्यपेक्षायामित्थमिति प्रकारार्थोऽयमितिशब्दः 'सोऽन्तरादन्तर'मिति वक्ष्यमाणप्रकारेणेत्यर्थः । यद्वा अत्रेतिर्हेतौ 'सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं संप्राविशत्' इति परमात्मानुप्रवेशात् सर्वात्मकत्वमित्यर्थः, इतिशब्दस्य हेतुपरत्वमभिप्रेत्य परमात्मप्रवेशादित्युक्तम्, यद्यपि इतिशब्दस्य समाप्तिरेवार्थः, अर्थान्तरं न स्यात्, तथाऽपि 'धर्मिकल्पनातो वरं धर्मकल्पने'ति न्यायात् प्रयुक्तस्येतिशब्दस्य रुद्रवाक्यावसानेऽन्वयकल्पनं न्याय्यम्, न त्वप्रयुक्तपदान्तराध्याहार इति, तस्माद्रुद्रवाक्यमेवेदम्, स इति परमात्मोच्यते बुद्धिस्थत्वात्परमात्मनः, सोऽन्तरादन्तरं शरीरादन्तरस्य प्राणादेरप्यन्तरं जीवं प्राविशत्, दिशश्चान्तरम्—दिक्शब्देन समस्तजगद्वर्तिवस्तुजातं लक्ष्यते, सर्वपदार्थानामन्तरं जीवात्मवर्गं प्राविशत्सर्वसामानाधिकरण्यस्य वक्ष्यमाणत्वात्, तदुपपत्तये स्वस्य सर्वजीवानां च परमात्मानुप्रवेश उक्तः । एवं रुद्रवाक्यत्वमेव युक्तम् । यद्वा श्रुतिवाक्यमस्तु, तदाऽयमर्थः—सः—रुद्रः—अन्तरादन्तरं जीवादन्तरं परमात्मानं प्राविशत् बुद्ध्याऽगाहत, अनुप्रवेशशब्दस्य सम्यग्बोधनार्थत्वं लोकसिद्धम्, तथा चाणक्यप्रयोगश्च—'यस्य यस्य हि यो भावस्तेन तेन तदन्तरम् । अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्' इति, स रुद्रः स्वान्तर्यामिणं सर्वपदार्थान्तर्यामिणं परमात्मानं तच्छरीरकं बुद्ध्याऽनुसंहितवानित्यर्थः । एवं निर्वाहद्वयमभिप्रेत्य परमात्मप्रवेशादित्युक्तम्, परमात्मनः प्रवेशादिति षष्ठीसमासः, परमात्म-

१. अ० शिरोप० २ ॥

प्राविशत्" इति परमात्मप्रवेशादुक्तमिति श्रुत्यैव व्यक्तम्, [1]"शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रकारेणैवमादीनामर्थः प्रतिपादितः।

यथोक्तं प्रह्लादेनापि [2]"सर्वगत्वादनन्तस्य स एवाहमवस्थितः। मत्तः सर्वमहं सर्वं मयि सर्वं सनातने" इत्यादि। अत्र सर्वगत्वादनन्तस्येति हेतुरुक्तः, स्वशरीरभूतस्य सर्वस्य चिदचिद्वस्तुन आत्मत्वेन सर्वगतः परमात्मेति सर्वे शब्दाः सर्व-शरीरं परमात्मानमेवाभिदधतीत्युक्तम्, अतोऽह-मितिशब्दः स्वात्मप्रकारिणं परमात्मानमेवाचष्टे अत इदमुच्यते [3]"आत्मेत्येव तु गृह्णीयात्सर्वस्य

कर्तृकप्रवेशात्परमात्मकर्मकप्रवेशाच्चेति भावः। (श्रुत्यैवेति) प्रत-र्दनविद्यादिष्विव न केवलन्यायेन परमात्माऽनुप्रवेशः कल्प्यते, अपि तु कण्ठोक्त इत्यर्थः। अस्यार्थस्य सूत्रकारोक्तिं दर्शयति (शास्त्रेति) परमात्मानुप्रवेशकण्ठोक्तिरहितेषु प्रतर्दनविद्यादिष्वपीन्द्रादीनां पर-मात्मात्मकत्वे सिद्धे परमात्मानुप्रवेशकण्ठोक्तिमत्स्वथर्वशिरःप्रभृतिषु कैमुत्यरीत्या परमात्मानुप्रवेशः सिध्यतीत्यभिप्रायेण सूत्रकारः प्रत-र्दनविद्याविषयसूत्रं प्रणीतवानित्यभिप्रायः।

सर्वसामानाधिकरण्यस्य परमात्मानुप्रवेशकृतत्ववैशद्याय उपबृंहणं दर्शयति (यथोक्तमिति) उदाहृतश्लोके हेत्वंशं तेन सर्वसामानाधि-करण्यसिद्धिं च दर्शयति (अत्रेति) (अत इदमित्यादि) इदम्—अहंग्रहेणोपासनं वाक्यकारेणोच्यते इत्यन्वयः, चेतनानां नित्य.

१. ब्र० सू० १-१-३१॥ २. वि० १-१९-८५॥ ३. वाक्य० ॥

तन्निष्पत्ते"रित्यादिनाऽहंग्रहणोपासनम्, वाक्यकारेण कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमात्मैवेति सर्वस्य तन्निष्पत्तेरित्युक्तम्, [1]"आत्मेति तूपगच्छन्ति ग्राहयन्ति चे"ति सूत्रकारेण च, महाभारते च ब्रह्मरुद्रसंवादे ब्रह्मा रुद्रं प्रत्याह—[2]"तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः।" इति रुद्रस्य ब्रह्मणश्चान्येषां च देहिनां परमेश्वरो नारायणोऽन्तरात्मतयाऽवस्थित इति। तथा तत्रैव—[3]"विष्णुरात्मा भगवतो भवस्यामिततेजसः। तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महेश्वरः।" इति। तत्रैव—[4]"एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ

त्वात् सर्वस्य तन्निष्पत्तिर्नोपपद्यत इत्यत्राह (कार्यावस्थ इति) विशिष्टाद्विशिष्टस्योत्पत्तिः, सा च चिदचित्स्वरूपनित्यत्वेऽप्यवस्थाभेदेन उपपद्यत इत्यर्थः। सूत्रं दर्शयति (आत्मेति) सामान्येन सर्वजीवानां परमात्मात्मकत्वे सिद्धेऽपि ब्रह्मशिवयोः परमात्मात्मकत्वं विशेषतो दर्शयितुमाह (महाभारते चेति) तव ममेत्युक्ते ब्रह्मशिवयोरप्रतिपत्तिः स्यादिति तत्प्रतिपत्त्यर्थं ब्रह्मरुद्रसंवाद इत्युक्तम्, तद्व्याचष्टे (रुद्रस्येति). नारायणस्यात्मान्तरव्यावृत्त्यर्थः परमेश्वरशब्दः। रुद्रस्यैव नारायणात्मकत्वे वचनमाह (तथेति) वचनान्तरमाह (तत्रैवेति) अत्र भगवदात्मकत्वं कथं प्रतीतमित्यत्राह (अन्तरा-

१. ब्र० ४-१-३ ॥ २. भा. मो. १७९-४ ॥
३. भा. क. प० ३५-५० ॥ ४. भा.मो. १९६-१६ ॥

स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ" इति, अन्तरात्मतयाऽवस्थितनारायणदर्शितपथौ ब्रह्मरुद्रौ सृष्टिसंहारकार्यकरावित्यर्थः । निमित्तोपादानयोस्तु भेदं वदन्तो वेदबाह्या एव स्युः "जन्माद्यस्य यतः" "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा"दित्यादिवेदवित्प्रणीतसूत्रविरोधात् । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" "न तस्येशे कश्चन तस्य नाम महद्यशः" "नेह नानाऽस्ति किञ्चन" "सर्वस्य वशी सर्वस्येशानः" "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् उतामृतत्वस्ये-

---

स्ततयेति ) केचिद्वैदिका भगवत उपादानत्वं रुद्रस्य निमित्तत्वं च वदन्ति 'उपादानं तु भगवान् निमित्तं तु महेश्वरः' इति, तन्निराकरोति ( निमित्तोपादानयोरिति ) सूत्रश्रुतिविरोधाभ्यां वेदबाह्यत्वमुपपादयति (जन्मादीति) सदेवेत्युपादानत्वम्, अद्वितीयम्, 'तदैक्षते'त्यादिना तस्यैव निमित्तत्वम् 'ब्रह्म स वृक्ष आसी'दिति उपादानता 'ब्रह्माध्यतिष्ठ'-दिति तस्यैव निमित्तत्वम्, ( सर्वे निमेषा इति ) कालविशिष्टस्य निमेषादीन् प्रत्युपादानत्वम् 'न तस्येशे' इति निमित्तत्वम्, 'नेह नानास्ती'त्युपादानत्वम्, सर्वस्य ब्रह्मकार्यत्वेन अब्रह्मात्मकत्वनिषेधात् 'सर्वस्य वशी'ति निमित्तत्वम्, 'पुरुष एवेदं सर्व'मिति निमित्तत्वमु-

शानः" "नान्यः पन्था अयनाय विद्यते" इत्यादि-सर्वश्रुतिगणविरोधाच्च ।

इतिहासपुराणेषु च स्थितिप्रलयप्रकरणयो-रिदमेव परतत्त्वमित्यवगम्यते, यथा महाभारते "केन सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ प्रलये च कमभ्येति तन्नो ब्रूहि पितामह !" इति पृष्ट "नारायणो जगन्मूर्तिरनन्तात्मा सनातन" इत्यादि च वदन् "ऋषयः पितरो देवा महाभूतानि धावतः । जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम्" इति च । प्राच्योदीच्यदाक्षिणात्यपाश्चात्यसर्वशिष्ट-सर्वधर्मसर्वतत्त्वव्यवस्थायामिदमेव पर्याप्तमित्य-विगीतपरिगृहीतं वैष्णवं च पुराणम्— "जन्मा

---

पादानत्वं च 'उतामृतत्वस्येशान' इति तस्यैव मुक्तिदत्वम्, 'नान्य' इति व्यतिरिक्तोपायनिषेधः ।

नारायणस्यैव परमकारणत्वे उपबृंहणवचनानि दर्शयति ( इतिहासेति ) तत्र रजस्तमोमूलत्वात् श्रुतिविरोधाच्च कारणदोषबाधकप्रत्ययव-प्रबन्धान् विहाय सात्त्विकेषु सर्वलोकाविगानपरिगृहीते महाभार-वचनानि दर्शयति ( यथेति ) श्रीविष्णुपराणे नारायणस्यैव परमका-रणत्वपराणि उपबृंहणवचनानि वक्ष्यंस्तदार्षं दर्शयति ( प्राच्येति क्वचित्परिग्रहव्यावृत्त्यर्थं प्राच्यादिग्रहणम् , कतिपयपरिग्रहव्यावृत्त्य-सर्वशब्दः, अनुष्ठाने तत्त्वस्थितौ च प्रमाणतया परिगृहीतमित्या ( सर्वधर्मसर्वतत्त्वव्यवस्थायामिति ) श्रुतवेदान्तस्य अनधीतशास्त्रा-बुभुत्सया प्रश्न इत्याह ( जन्मादीति ) अस्यानन्यपरतास्योतनार्थं

द्यस्य यतः” इति जगज्जन्मादिकारणं ब्रह्मेत्यवगम्यते तज्जन्मादिकारणं किमिति प्रश्नपूर्वकं ‘विष्णोः सकाशादुद्भूत’मित्यादिना ब्रह्मस्वरूपविशेषप्रतिपादनैकपरतया प्रवृत्तमिति सर्वसम्मतम्, तथा तत्रैव– “प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥ परमात्मा च सर्वेषामाधारः परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयते” इति । सर्ववेदवेदान्तेषु सर्वैः शब्दैः परमकारणतयाऽय-

---

( जन्मादिकारणं किमिति प्रश्नपूर्वकमिति ) अयमभिप्रायः– सामान्यविषयप्रश्नस्य विशेषविषयोत्तरमुखेन प्रवृत्तत्वं च प्रामाण्यहेतुः, अनन्यपरत्वं हि तत्, विशेषविषयप्रश्नपूर्वकं चेत् ? प्रष्टुरभिमतार्थ उक्तः स्यात्, सामान्यविषयप्रश्नपूर्वकत्वे तत्त्वस्थितिः प्रतिपादिता भवति, तस्मादत्रापि सामान्यविषयप्रश्नपूर्वकत्वात् प्रामाण्यं स्पष्टमिति सामान्यविषयप्रश्नपूर्वकविशेषविषयत्वप्रदर्शनाय उदाहृतेन ‘विष्णोः सकाशा’दित्यादिश्लोकेन प्रबन्धोपक्रमस्य भगवत्परत्वमुक्तं भवति । उपसंहारस्य भगवत्परत्वमाह ( तथेति ) परमकारणत्वमुक्तं प्रकृतिर्येति, स च परमात्मा नारायण इति वदति ( परमात्मेति ) आधार इति शरीरात्मभावः, परमेश्वर इति परमात्मन ईश्वरानतिरिक्तत्वम्, स च क ? इत्यत्राह ( विष्णुनामा स वेदेषु वेदान्तेषु च गीयत इति ) वेदेषु वेदान्तेषु च कथं विष्णोरेव वाच्यत्वम् ? अग्न्यादीनामपि प्रतिपाद्यमानत्वादिति शङ्कायां तद्व्याचष्टे ( सर्वेति ) अग्न्यादिशब्दा अपि परमात्मभूतभगवत्पर्यन्ता

मेव गीयत इत्यर्थः । यथा सर्वासु श्रुतिषु केवलपरब्रह्मस्वरूपविशेषप्रतिपादनायैव प्रवृत्तो नारायणानुवाकः, तथेदं वैष्णवं च पुराणम् "सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत् । बभूव भूयश्च यथा महाभाग ! भविष्यति । यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम् ॥ लीनमासीद्यथा यत्र लयमेष्यति यत्र च" इति परं ब्रह्म किमिति

---

इत्यर्थः । पूर्वं संग्रहेणोक्तमनन्यपरत्वं विवृणोति ( यथेति ) सामान्यविषयप्रश्नपूर्वकत्वं प्रश्नश्लोकेन दर्शयति ( सोऽहमिति ) ( यत इति ) निमित्तोपादानयोः सह प्रश्नः, श्रुतवेदान्तस्य प्रश्नत्वात्तु-च्छत्वविवर्तत्वपरिणामत्वसद्वारकत्वाद्वारकत्वादिप्रकारज्ञापनार्थं यथेति प्रश्नः, तत्र कालभेदेन सृष्टिकारणप्रकारभेदोऽनधीतश्रुत्यन्तरोक्तः किमित्यभिप्रायेण बभूव भविष्यतीति प्रश्नः, यतो बभूव-यथा बभूव, यतो भविष्यति– यथा भविष्यतीति प्रश्नः, लयेऽप्येवम् । उत्पत्तिकारणतत्प्रकारविषयप्रश्नानां मध्ये 'यन्मय'मित्यनेन व्यवधानमुत्पत्तिकारणतत्प्रकारयोः पृथग्ज्ञातव्यत्वादन्तराकृतम्, यन्मयमिति स्थितिकारणप्रश्नः, मयट् प्राचुर्यार्थः, विकारार्थत्वमनपेक्षितं यत इत्युपादानस्यापि पृष्टत्वात्, न च तत्सङ्कोचोऽपेक्षितः, स्थितिप्रश्नवचनमनपेक्षितवचनं च यथा भवति तथा सङ्कोचानुपपत्तेः, तस्मात् प्राचुर्यार्थो मयट्, आन्तरस्थितिकारणप्रश्नोऽयम्, अन्तःप्रविश्य धारकतया हि स्थितिः प्रतीयते, 'यन्मयं च' इति चशब्देन बाह्यस्थितिकारणप्रश्नो विवक्षितः, 'लयमेष्यति यत्र चेति' चकारेण भूतभविष्यल्लयकर्तृप्रश्नद्वयमाभिप्रेतम् । एवं सामान्यविषयप्रश्न इत्याह ( परं ब्रह्म किमितीति ) प्रकृतस्य प्रवृत्तत्वमिति

अङ्क्रम्य—"विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम्। स्थितिसंयमकर्त्ताऽसौ जगतोऽस्य जगच्च सः॥ परः पराणां परमः परमात्मात्मसंस्थितः।

---

उत्तरत्रान्वयः, विशेषविषयोत्तरसङ्क्षेपश्लोकमाह (विष्णोरिति) विष्णोः सकाशात्—सकाशशब्दः पञ्चम्यंनतिरिक्तार्थः, चतुर्थ्यर्थे कृते इतिवत्, गुरुसकाशादितिवच्च। यद्वा सकाशात् काशः—प्रकाशः, सङ्कल्परूपज्ञानसहितादित्यर्थः। यद्वा सकाशः पार्श्वः शरीरैकदेशादित्यर्थः, विष्णुशब्दस्य रूढ्या देवताविशेषनिर्णयः, देवतापारमार्थ्यं च यथावद्वेत्स्यते भवानिति हि वरप्रदानम्, पारमार्थ्यशब्देन धर्मिविपर्यासाभावः, यथावच्छब्देन प्रकारविपर्यासाभावश्च विवक्षितः, रजस्तमःकालुष्यराहित्यं फलितमनेन, एवं वरप्रदानानुगुणदेवताविशेषनिर्णयो रूढ्या, विष्णुशब्दस्य अवयवशक्त्या प्रकारप्रश्नोत्तरमुक्तम्, अनेनोपादानत्वं हि सद्वारकमित्युक्तं भवति, यत्रेति लयस्थानप्रश्नस्योत्तरमाह (तत्रेति) तत्रैव—विष्णावेव, अत्रापि विष्णुशब्देन लयस्थानत्वं सद्वारकमिति सिद्धम् अविशेषेणोक्तत्वात् कालविशेषप्रश्नोऽपि दत्तोत्तरः, लयकर्तृप्रश्नस्य 'चशब्दावगतस्योत्तरं बाह्यस्थितिकर्तृत्वं चाह (स्थितिसंयमेति) आन्तरस्थितिकारणप्रश्नोत्तरं— जगच्च स इति, अनेन सामानाधिकरण्येन धार्यधारकत्वादि सिद्धम्। अथ नमस्कारश्लोकानामनन्तरस्थानि वचनान्याह (पर इति) तत्र ब्रह्मणो निखिलजगत्कारणत्वोपपत्तये अपरिच्छिन्नत्वमुच्यते, परिच्छिन्नं हि परिमितकार्यकारणम्, तस्मात्कृत्स्नकारणत्वोपपत्त्यर्थमपरिच्छिन्नत्वमुच्यते, श्रुतिभिश्च 'सत्यं ज्ञानमनन्तं ब्रह्म'त्यादिभिस्त्रिविधापरिच्छेद उक्तः, तत्र त्रिविधं परिच्छेदं विस्तरेण वक्ष्यन् प्रथमं संग्रहेणाह 'परः पराणा'मित्यर्द्धेन, ब्रह्मादीनामपि परः परमः, अनेन कालपरि-

रूपवर्णादिनिर्देशविशेषणविवर्जितः ! अपक्षय-
विनाशाभ्यां परिणामर्द्धिजन्मभिः ॥ वर्जितः
शक्यते वक्तुं यस्सदाऽस्तीति केवलम् । सर्व-

च्छिन्नेभ्यः परत्वादस्य कालानवच्छेदः फलितः, परमात्मेति देशा-
परिच्छेदः, आप्नोतीति ह्यात्मा, वस्त्वनवच्छेदमाह (आत्मसंस्थित
इति) आत्मनि संस्थितः—स्वनिष्ठः, अनेनान्येषामेतन्निष्ठत्वात्तद्वा-
चिशब्दा एतत्पर्यन्ताः, सर्ववस्तुसामानाधिकरण्यार्हत्वं वस्त्वनव-
च्छेदः, इदमत्र नान्यत्रेति देशावच्छेदः, इदमिदानीमेव नान्यदेति
कालावच्छेदः, इदमिदं न भवतीति वस्त्ववच्छेदः, तत्तद्विपर्य-
यस्तत्तदनवच्छेदः, स यथोक्तप्रकार एव । तत्र प्रथमं कालापरि-
च्छेदं विस्तरेण वदन् कालपरिच्छिन्नव्यावृत्तिमाह (रूपेति) रूपं
जातिः 'जातिगुणौ च रूपिणां रूपे' इति वचनात् । वर्णो गुणः,
आदिशब्देन क्रिया दण्डकुण्डलादिद्रव्यं च विवक्षितम्, तद्वाचि-
शब्दो रूपवर्णादिनिर्देशः, विशेषणानि रूपादीनि तान्येव, रूपव-
र्णादिवाचिशब्दैस्तद्वाच्यरूपवर्णादिभिश्च वर्जित इत्यर्थः । रूपवर्गा-
दीति पाठे रूपं गुणः, वर्गो जातिः, देववर्गो मनुष्यवर्ग इति वर्गरू-
पत्वात् तस्याः । यद्वा रूपवर्णादिलक्षणैः तत्तन्निर्देशलक्षणैश्च विशे-
षणैर्विवर्जितः, अन्यत्तुल्यम्, षड्भावविकारराहित्यमाह (अपक्ष-
येति) जन्मशब्दो जायतेऽस्तीति विकारद्वयस्योपलक्षणार्थः, अपक्ष-
यादिवर्जितत्वात्तद्वाचिशब्दागोचरत्वं चेति सिद्धम् । तर्हि कथं
वक्तुं शक्यत इत्याह 'शक्यते वक्तुं यः सदाऽस्तीति केवल'मिति,
केवलशब्देनापक्षयादिवाचकशब्दव्यावृत्तिः, सदाशब्देन कादाचित्का-
स्तित्वव्यावृत्तिः, एवं कालपरिच्छेदवतां जात्यादिकल्पनान्वयोऽपक्ष-
याद्यन्वयश्च तदुभयवाचिशब्दगोचरत्वं च दृष्टम्, तदभावाद्ब्रह्म काला-
परिच्छिन्नमित्युक्तम्, नामनिर्वचनमुखेन देशापरिच्छेदमाह (सर्व-

त्रासौ समस्तं च वसत्यत्रेति वै यतः । ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम् । एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥ तदेव सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत् । तथा पुरुषरूपेण कालरूपेण च स्थितम् । स सर्वभूतप्रकृतिं विकारान् गुणादिदोषाँश्च

---

त्रेति ) ब्रह्मणो हि त्रिविधापरिच्छेदः, कथमत्र वासुदेवस्य त्रिविधापरिच्छेद उच्यते इत्यत्राह ( तद्ब्रह्मेति ) वासुदेवपरामर्शिनस्तच्छब्दस्य नपुंसकत्वं ब्रह्मविशेषणत्वात्, 'अजमक्षयमव्यय'मित्यनेन विकारान्तरराहित्यमप्युपलक्षितम्, तस्मान्नित्यम्, एवमचिद्व्यावृत्तिः, हेयाभावाच्च निर्मलमिति बद्धव्यावृत्तिः, सदा निर्मलमिति मुक्तव्यावृत्तिः, एकस्वरूपं चेति नित्यसिद्धव्यावृत्तिः, ते हि बहवः, ब्रह्म तु समाभ्यधिकराहितम्, वासुदेव एवैवंविधं परं ब्रह्मेत्यर्थः । यद्वा अजम्—जायतेऽस्तीति विकारद्वयव्युदासः अक्षयमव्ययमित्यपक्षयविनाशनिषेधः, एकस्वरूपमिति विपरिणमते विवर्द्धते इति मध्यमविकारद्वयनिवृत्तिः, परममिति नित्यसूरिव्यावृत्तिः, अन्यत्तुल्यम्, एवं देशापरिच्छेदमुखेन देवताविशेषनिर्णयश्च कृतः, तथा श्रुतिश्चानन्त्यं वदति देवताविशेषनिर्णयञ्चाह 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति, अनन्तशब्दस्यावयवशक्त्या त्रिविधापरिच्छेदः सिद्धः । रूढ्या देवताविशेषनिर्णयः, तर्हि पुँलिङ्गत्वं स्यादिति चेत्—पुंलिङ्ग एवानन्तशब्दो द्वितीयाविभक्त्यन्तः 'यो वेद निहितं गुहाया'मिति वेदेतिपदेनान्वयात्, एवं श्रुत्यनुसारादत्र वासुदेवस्य परब्रह्मत्वमुक्तम् । अथ वस्त्वनवच्छेदमाह ( तदेवेति ) व्यक्ताव्यक्तस्वरूपवदित्यत्र स्वरूपशब्दो वस्त्वनतिरिक्तार्थवाची, व्यक्ताव्यक्तस्वरूपवत् पुरुषरूपेण कालरूपेण च स्थितं सर्व-

मुने व्यतीतः। अतीतसर्वावरणोऽखिलात्मा तेना-
स्तृतं यद् भुवनान्तराले । समस्तकल्याणगु-
णात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतवर्गः ॥
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धि-
तोऽसौ ॥ तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्या-
दिगुणैकराशिः । परः पराणां सकला न यत्र
क्लेशादयः सन्ति परावरेशे ॥ स ईश्वरो व्यष्टिस-

---

मेवैतत् जगत्तद्ब्रह्मैवेत्यर्थः । अनेन वस्त्वपरिच्छेद उक्तः, सर्वसामा-नाधिकरण्यार्हत्वं हि वस्त्वपरिच्छेदः, एवमुपक्रमगतवचनजातमुक्तम्। उपसंहारगतवचनजातान्याह (स सर्वेति) सर्वभूतानां प्रकृतिः प्रधानं, विकारा महदादयः, गुणाः सत्त्वरजस्तमांसि, आदिशब्देन तत्प्रयुक्त-रागद्वेषदुःखादयो विवक्षिताः, आवरणं—ज्ञानसङ्कोचः, सर्वविषयज्ञा-नावरणं हि तत्, अखिलात्मेति पदं विवृणोति (तेनास्तृतमिति) एवं धर्मिस्वरूपस्य हेयप्रत्यनीकत्वमुक्तम् । अथ दिव्यात्मस्वरूपस्य कल्याणगुणत्वमाह (समस्तेति) कल्याणगुणशब्दो धर्मपरः, 'द्व्येकयोर्द्विवचनैकवचने' इत्यत्र द्व्येकशब्दवत्, द्वित्वैकत्वयोरर्थयो-रिति हि वृत्तिः, समस्तकल्याणत्वं गुणो यस्य स समस्तकल्याण-गुणः, एवंविधं दिव्यात्मस्वरूपं यस्य स समस्तकल्याणगुणात्मकः। दिव्यात्मस्वरूपमनायासेन सर्वधारकमित्याह (स्वशक्तीति) विग्र-हवैलक्षण्यमाह (इच्छेति) तत्प्रयोजनमाह (संसाधितेति) षाड्गुण्यमाह (तेज इति) गुणादित्रोपानिति पूर्वोक्तं विवृणोति (सकला इति) आदिशब्देन कर्मविपाकाशया विवक्षिताः, अत एव परः पराणाम् । एवमुभयलिङ्गत्वेन विलक्षणस्य कथं जगत्सामाना-धिकरण्यमित्यत्राह (स ईश्वर इति) जगच्छरीरकत्वादि

हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥" इति, तस्मात्परभक्तिरूपापन्नमेव वेदनं तत्त्वतो भगवत्प्राप्तिसाधनम्, यथोक्तं भगवता द्वैपायनेन मोक्षधर्मे सर्वोपनिषद्व्याख्यानरूपम्– "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह ॥" धृत्या समाहितात्मा भक्त्या पुरुषोत्तमं पश्यति–साक्षात्करोति प्राप्नोतीत्यर्थः ।

---

मिति ) ( तस्मादिति ) पुत्रत्वादिरूपेण भगवत्प्राप्तिर्दशरथादेरप्यस्तीति तद्व्यावृत्त्यर्थं तत्त्वत इत्युक्तम्, यथावदनुभवसाधनमित्यर्थः । तत्र महाभारते वचनमाह ( यथोक्तमिति ) 'न संदृशे तिष्ठती'त्यादिश्रुत्युपबृंहणरूपत्वात्सर्वोपनिषद्व्याख्यानरूपमित्युक्तम्, न संदृश इत्यादि पूर्वार्द्धं वेदे महाभारते च तुल्यम्, भक्त्येत्यनेनोत्तरार्द्धगतहृच्छब्दो व्याख्यात इति ज्ञायते, स्थानप्रमाणात्, धृतिरिन्द्रियाणां विषयवैमुख्यकरणम्, अनेन शमदमादय उपलक्षिताः । 'हृदा मनीषा मनसाऽभिक्लृप्तः' भक्त्या शमदमादिना चान्वितेन मनसा सम्पद्यत इति तस्य वाक्यस्यार्थः । श्लोकमन्वयक्रमेण व्याचष्टे ( धृत्येति ) अन्वयक्रम एवमिति कथमवगम्यते इत्यत्राह ( भक्त्या त्विति ) ततः किं वेदनादिशब्दैः भक्तेरभिधेयत्वे इत्यत्राह ( भक्तिश्च ज्ञानविशेष एवेति ) भक्तिः– प्रीतिविशेषः, प्रीतिश्च ज्ञानादनर्थान्तरमिति पूर्वमेवोक्तम्; तस्मात्प्रीतिरूपा भक्तिर्ज्ञानविशेष इति । ( सर्वमुपपन्नमिति ) स्वपक्षस्थापन–परपक्षप्रतिक्षेपयोर्यत्प्रमाणजातमुक्तं तेनैवाऽनुक्तमन्यदपि च वक्तव्यं सर्वं निर्वाह्यम् । अत्रैव कृत्स्नान्तर्भावादित्यर्थः । अस्य

"भक्त्या त्वनन्यया शक्यः" इत्यनेनैकार्थ्यात्। भक्तिश्च ज्ञानविशेष एवेति सर्वमुपपन्नम्।

सारासारविवेकज्ञा गरीयांसो विमत्सराः।
प्रमाणतन्त्राः सन्तीति कृतो वेदार्थसंग्रहः॥

इति श्रीभगवद्रामानुजाचार्य-
विरचितो वेदार्थसंग्रहः
समाप्तः॥

---

प्रबन्धस्यातिगम्भीरताप्रदर्शनार्थमाह ( सारासारेति ). अनेन सर्वजनापरिग्रहो न दोषः, अशिष्टपरिग्रह एव दोषः। तस्माद्विशिष्टजनपरिगृह एव श्लाघ्यताहेतुरिति चोक्तं भवति। सारासारविवेकज्ञाः— परस्परविरुद्धानेकार्थेषु प्रतिपन्नेषु तत्र प्रमाणतर्कैः प्राबल्यदौर्बल्यविभागविदः, गरीयांसः— बहुश्रुताः, न बाहुश्रुत्याभावे तत्तच्छास्त्रोक्तानां प्राबल्यदौर्बल्यविभाग उपपद्यते। बाहुश्रुत्ये सत्यप्यस्मिन् शास्त्रेऽयमर्थ उक्तः, अन्यत्रान्यः, किमत्र तत्त्वमिति व्यवस्थितिर्नास्तीति केचिन्मन्दधियो मन्यन्ते, अतः सारासारविवेकज्ञत्वमपेक्षितम्, एवमुभयस्मिन्सत्यप्यस्मत्सवयस्कोऽनेनोक्तं कथं वयमङ्गीकुर्म इति मत्सरोपहताश्चेदुभयमपि निष्फलमिति तद्व्यावृत्त्यर्थं विमत्सरा इत्युक्तम्। उक्तविशेषणत्रयफलमाह ( प्रमाणतन्त्रा इति ) ये प्रमाणानुसारिणः तदनुगुणैस्तर्कैरर्थं निरूपयन्ति, न तु स्वापेक्षितार्थे प्रमाणजातं क्लेशेन नयन्ति ते प्रमाणतन्त्राः। 'कालो ह्ययं निरव-

धिर्विपुला च पृथ्वी'ति प्रकारेण यत्र कुत्रचिद्यदा कदाचिदेवंविधाः पुरुषास्संभविष्यन्तीति मत्वा तेषामभिमतिविषयत्वेन वेदार्थसंग्रहः कृत इत्यर्थः ।

वेदार्थसंग्रहसुधां वेदान्ताब्धेर्य आहरत्
रामानुजाय मुनये तस्मै भगवते नमः ।
वेदार्थसंग्रहव्याख्याऽभिहितेयं यथाश्रुता
वेदव्यासापराख्यानश्रीसुदर्शनसूरिणा ॥

इति श्रीहरितकुलतिलकश्रीवाग्विजयिसूनुना श्रीवत्सा-
ङ्कमिश्रवंश्येन श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासा-
परनामधेयेन श्रीमद्वरदाचार्यपादसेवा-
समधिगतवेदार्थसंग्रहतात्पर्येण
श्रीसुदर्शनसूरिणा विलि-
खिता तात्पर्यदीपि-
का समाप्ता ॥

---

तत्तत्कल्पितयुक्तिभिः शकलशः कृत्वा तदीयं मतं
यच्छिष्यैरुदमर्दि सात्त्वतमतस्पर्धावतामुद्धतिः ।
यच्चेतः सततं मुकुन्दचरणद्वन्द्वास्पदं वर्तते
जीयान्नाथमुनिः स योगमहिमप्रत्यक्षतत्त्वत्रयः ॥ १ ॥
वन्दिषीय वरणीयवाङ्मयं वारिधिं वरगुणौघसम्पदाम् ।
वत्सवंश्यवरदार्यसंश्रयं वादिहंसनवनारिदं गुरुम् ॥ २ ॥
श्रीविष्णुचित्तपदपङ्कजसङ्गमाय
चेतो मम स्पृहयते किमतः परेण

[illegible]मप्यपि यतिशेखरभारतीनां
भावः कथं भवितुमर्हति वाग्विधेयः ॥ ३ ॥

यः पर्याप्तकलः ख्यातो यतिराजाब्धिचन्द्रमाः ।
कुशलं दिशतान्मेऽसौ कुरुकेश्वरदेशिकः ॥ ४ ॥

तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥ ५ ॥

नमो नमः पूर्वाचार्येभ्यो बोधायनप्रमुखेभ्यः ॥



॥ श्रीरस्तु ॥

